

# राष्ट्रिय संस्कृत संस्थानम्
नवदेहली

गङ्गानाथ झा केन्द्रीय संस्कृत विद्यापीठ ग्रन्थमाला

॥ ३६ ॥

अथ

श्रीटोडरानन्दान्तर्गतम्

# वास्तुसौख्यम्

भाषानुवादेन विशदीकृतम्

डा० शैलजा-पाण्डेयेन सुसंपाद्य अनूदितम्



# Rashtriya Sanskrit Sansthan

*( Under the auspices of the Ministry of Human Resources Development, Govt. of India )*

**New Delhi**

•

**Ganganatha Jha Kendriya Sanskrit Vidyapitha TEXT SERIES**

•

*General Editor*

**Dr. G. C. Tripathi**

•


## No. 39

# VĀSTUSAUKHYAM

*(A work on Hindu Architecture, forming part of Toḍarānanda)*

*ascribed to*

*Toḍara Malla*

*Edited and Translated by*

Dr. Shailja Pandey





ALLAHABAD

1993

राष्ट्रियसंस्कृतसंस्थानम्

( केन्द्रीयमानवसंसाधनविकासमन्त्रालयस्याङ्गभूतम् )

नवदेहली

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला

प्रधानसम्पादक:

डॉ० गयाचरण त्रिपाठी

—•—

एकोनचत्वारिंशत्तमं प्रसूनम्

—•—

टोडरानन्दान्तर्गतं

# वास्तुसौख्यम्

( टोडरमल्लोपज्ञम् )

—•—

सम्पादिका

डॉ० शैलजा पाण्डेय

—•—

गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्

चन्द्रशेखर आज़ाद पार्क

इलाहाबाद–२११००२

१९९३

# वास्तुसौख्यम्

( भाषानुवादविभूषितम् )

●

सम्पादिका

डॉ० शैलजा पाण्डेय




श्रीगङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्

चन्द्रशेखर आज़ाद पार्क

प्रयाग-२११००२

१९९३ ई०

प्रकाशकः
डॉ० गयाचरण त्रिपाठी
प्राचार्यः
गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्
चन्द्रशेखर आज़ाद पार्क
इलाहाबाद-२

●



●

मूल्यम्

978-93-83135-64-6

●

मुद्रकः
शाकुन्तल मुद्रणालयः
३४, बलरामपुर हाउस
इलाहाबाद-२

## FOREWORD

The *Vāstusaukhyam* ascribed to Raja Toḍara Malla (16th C. A. D.), one of the nine 'gems' of the Court of the great Moghal Emperor Akbar, is a rare work dealing with the canons and priniciples of Hindu architecture. It is supposed to be a part of the voluminous Dharmaśātra-work *Toḍarānanda* ('the joy of Toḍara') which probably some protage′ of Toḍara composed and passed on under the name of his Patron in lieu of favours received from him. It is out of question that Toḍara himself was the author of his work since he is not known to possess any great knowledge of Sanskrit. On the contrary, it is he who is credited to have introduced in the Moghal Court the tradition of keeping revenue records in the Persian language.

The various sections appearing in the Toḍarānanda are termed as *Saukhyam*. The true extent of Toḍarānanda, however, has not yet been fixed with certainty. Different Manuscripts of *Toḍarānānda* Contain different number of *Saukhyams* and, peculiarly enough, the *Vāstusaukhyam* usually does not form a part of the manuscripts of *Toḍarānanda* but is mostly found separately as an indepen-

dent work. It has to be investigated whether this was originally a part of that great work or not.

The text of *Vāstusaukhyam* has not come down to us in a faultless form. It contains a number of lacunas and corrupt readings. Even a careful collation of all the available manuscripts does not help restore the text properly. Dr. Shailja Pandey, however, has not spared any pains to reconstruct the text in as pure a form as possible by first collecting all the available manuscripts of the work and then by consulting all available subject-experts on this theme.

The Sanskrit of *Vāstusaukhyam* can best be described as 'Brahmanical hybrid Sanskrit.' It is the product of an age in which the knowledge of Sanskrit was no more so common (due to higher importance attached to Persian as अर्थकरी विद्या) but it was still fashionable to compose scientific and Śastric works in it.

Dr. Shailja Pandey has however made up for the uncertainties, irregularities and ambiguities of the Sanskrit text by providing an excellent Hindi translation to the work for which she deserves congratulations.

*Vāstusaukhyam* mostly and mainly deals with the secular or profane architecture though it does take into consideration the religious architecture as well.

A work on Indian architecture contains in itself not only the elements of the science of architecture but also elements or religious and folk beliefs as well as

elements of astrology It is hoped that the publication of this work would help scholars understand the principles which guided the people of ancient India in matters of architecture and town planning.

G. N. Jha K. S. Vidyapeetha
Allahabad
April 15th, 1993

Gaya C. Tripathi
*Principal*

# प्ररोचना

भवनविन्यासः मानवसभ्यतायस्संस्कृतेश्चाध्ययने प्रमुखकारणं वर्तते। स्थापत्यस्यौत्कर्ष्यं मानवसमाजस्य सांस्कृतिकाभिरुचिं वैभवञ्च प्रदर्शयति । भारतवर्षे भवनप्रकल्पनं प्रत्नादेव कालात् परिज्ञातमासीत्। सर्वासु वैदिकसंहितास्वस्य वर्णनं संङ्केतितमस्ति, किन्तु अथर्ववेदसंहितायां शालासूक्ते विशेषतया स्थापत्यवर्णनं कल्पितमस्ति । स्थापत्यविद्यायाः वोजमथर्ववेदे विद्यते । अथर्ववेदादुद्भूतं स्थापत्यं वास्तुशास्त्रस्योपजीव्यं सञ्जातमिति भागवते (३।१२।३७-३९) प्रमाणितं भवति । स्थापत्यविद्यायाः पोषणम् ऋषिभिर्विहितम् । मत्स्यपुराणे शिल्पशास्त्रोपदेशकाः अष्टादशाचार्याः शंसिताः[1] ।

आचार्येषु मयविश्वकर्माणौ प्रख्याततरौ स्तः । विश्वकर्मा औदीच्यपरम्परायाः मयश्च दाक्षिणात्यपरम्परायाः दीपस्तम्भौ वर्तेते । समराङ्गणसूत्रधारानुसारं प्रभावसोः सूनुः विश्वकर्मा देवगुरोः बृहस्पतेः भागिनेयः, अपराजितपृच्छानुसारञ्च भृगोः भागिनेयः उक्तः । उभौ ऋषी शिल्पशास्त्रस्योपदेशकौ स्तः । अष्टावसूनां ख्यातिरपि शिल्पज्ञत्वेन प्रथिता ।

---

१. भृगुरत्रिर्वसिष्ठश्च विश्वकर्मा मयस्तथा ।
नारदो नग्नजिच्चैव विशालाक्षः पुरन्दरः ।।
ब्रह्मा कुमारो नन्दीशः शौनको गर्ग एव च ।
वासुदेवोऽनिरुद्धश्च तथा शुक्रबृहस्पती ।।
अष्टादशैते विख्याताः शिल्पशास्त्रोपदेशकाः ।'

—मत्स्यपुराण, २५२।२-४ ।

वास्तुशास्त्रं ज्योतिषगणितयोः प्रयोगविज्ञानं वर्तते । स्थापत्यस्याधारभूता पृथिवी सौरमण्डलेन सह सम्बद्धास्ति । सूर्यचन्द्रनक्षत्रादीनां प्रभावः अस्योपरि परिलक्ष्यते । अतएव लोकेऽस्मिन् वास्तुप्रकल्पनात् प्राग्आयादिविचारः नक्षत्रपरीक्षा लग्नतिथिवारप्रभृतीनां निर्धारणञ्च भवति । एवमष्टाङ्गस्थापत्ये ज्योतिषशास्त्रस्य प्रमुखस्थानं वर्तते ।

मितिः वास्तुप्रकल्पनस्य भित्तिः अस्ति । मापनं विना सुष्ठुप्रकल्पनमसम्भवमस्ति । कार्येऽस्मिन् गणितशास्त्रस्य प्रयोगो भवति । वास्तुकर्मणि ज्यामितिशास्त्रेणाकृतिप्रकल्पनं भवति । अतः वास्तुशास्त्रस्यापरं सहयोगिशास्त्रं गणितशास्त्रमस्ति । किञ्च देशचयने भूमिचयने भूमिपरीक्षणे शल्यशोधने च वास्तोः सहायकानि भूगोलभूगर्भप्रभृतिशास्त्राणि सन्ति ।

## वास्तुसौख्यस्य परिचयः

प्रकृतः ग्रन्थः वास्तुसौख्यमिति टोडरानन्दीयमुक्तम् । टोडरानन्दः आचारसंहितायाः बृहत्कोशोऽस्ति यस्य कर्ता राजा टोडरमल्लः शंसितः । श्रीटोडरमल्लः ग्रन्थं ग्रन्थान् वा लिखितवान् इत्यस्योल्लेखः इतिहासे न प्राप्यते किन्तु टोडरानन्दग्रन्थस्य सौख्येषु श्रीटोडरस्य कर्तृत्वेनोल्लेखो प्राप्यते । यथा वास्तुसौख्ये उल्लिखितम्—

**'गृहसौख्यं तनोत्येष श्रीटोडरमहीपतिः[1] ।'**

ग्रन्थान्तेऽपि श्रीटोडरस्योल्लेखो प्राप्यते—

**'इति श्रीमन्महाराजाधिराज श्रीटोडरमल्लविरचिते टोडरानन्दे वास्तुसौख्यं सम्पूर्णम्'** । इति

विद्वज्जनानुसारं विविधखण्डात्मकोऽयं ग्रन्थः विविधैः शास्त्रज्ञैः विद्वद्भिः लिखितोऽस्ति । अस्य ज्योतिषभागस्य कर्ता ताजिकनीलकण्ठी-

---

१. वास्तुसौख्यम्, श्लोक ६ ।

ग्रन्थस्य विख्यातो लेखकः श्रीनीलकण्ठः वर्तते[१]। अन्यखण्डानां लेखकः कर्ता वा अज्ञातनामा वर्तते[२]। अनेनेदं प्रतीयते यत् टोडरानन्दग्रन्थस्य कारयिता श्रीटोडरमल्लोऽस्ति, यः आत्मनः संरक्षकत्व अस्य प्रणयनं विविधैः विद्वद्भिः कारितवान्।

ग्रन्थोऽयमूनविंशतिसौख्येषु[३] त्रयोविंशतिसौख्येषु[४] वा प्राप्यते। ते सन्ति—सर्गावतारः, कालनिर्णयः, संस्कारः, आचारः, शुद्धिनिर्णयः, श्राद्धः, वर्षकृत्यं, व्रतविधिः, प्रतिष्ठाविधिः, पूजा, दानं, शान्तिकं, तैर्थिकं, विवादः, व्यवहारः, राजनीतिः, प्रायश्चित्तं कर्मविपाकः, आयुर्वेदश्च[५]। एतेषु सौख्येषु कतिपयसौख्यानि अनूपसंस्कृतपुस्तकालये सन्ति[६]।

उपर्युक्तसौख्येषु ज्योतिषसौख्यस्य पाठो नास्ति। पिङ्गरेमहोदयः ज्योतिषसौख्यं ग्रन्थस्य तृतीयं सौख्यं स्वीकरोति। अस्य कर्ता नीलकण्ठोऽस्ति। ज्योतिषसौख्ये त्रीणि सौख्यानि सन्ति—संहितासौख्यम्, गणितसौख्यम् होरासौख्यञ्च।

विवाहसौख्यम् वास्तुसौख्यञ्च एतदतिरिक्तं स्तः। पिङ्गरेमहोदयानुसारं सम्भवतः परवर्तिसौख्ये टोडरानन्दस्य मूलयोजनायां न स्तः अपितु अनयोः टोडरानन्दे सन्निवेशः कालान्तरे जातः[७]।

टोडरानन्दस्य रचनाकालः १५६५-१५८९ ख्रिष्टाब्दयोः मध्ये

---

१. डेविड पिंगरे—"ज्योतिषशास्त्र ऐस्ट्रल एण्ड मैथेमेटिकल लिटरेचर", ए हिस्ट्री आफ इन्डियन लिटरेचर, भाग ६ (४), पृ० ११६।

२. के० एम० के० शर्मा—"टोडरानन्द", जर्नल आफ गंगानाथ झा रिसर्च इन्स्टीट्यूट, भाग ३, १९४५-४६, पृ० ६३।

३. के० एम० के० शर्मा—तत्रैव, पृ० ६६।

४. डेविड पिंगरे—पूर्वोक्त, पृ० ११६।

५. के० एम० के० शर्मा—पूर्वोक्त, पृ० ६६।

६. के० एम० के० शर्मा—पूर्वोक्त, पृ० ६६।

७. डेविड पिङ्गरे—पूर्वोक्त, पृ० ११६।

वर्तते । ज्योतिषखण्डस्य रचनाकालः १५७२ ख्रिष्टाब्दोऽनुमितो वर्तते[1] । वास्तुसौख्यास्यापि कालः ज्योतिषखण्डस्य कालो भवेदिति अनुमीयते ।

## वास्तुसौख्यस्य मातृकाः विवरणम्

वास्तुसौख्यस्य तिस्रो मातृकाः मया प्राप्ताः यासामुल्लेखः क–ख–ग –संज्ञाभिः ग्रन्थेऽस्मिन् विद्यते । तासां परिचयः एवमस्ति ।

*क-मातृका*

कर्गदपत्रे लिखितेयं मातृका गङ्गानाथझाविद्यापीठस्य सङ्ग्रहालये वर्तते । इयमेकत्रिंशत्पत्रयुता देवनागरीलिपिवद्धा पूर्णा सुस्पष्टवर्णास्ति । प्रतिलिपिकालस्योल्लेखो मातृकायां नास्ति ।

**पुष्पिका—**

इति श्रीमन्महाराजाधिराज श्रीटोडरमल्लविरचिते टोडरानन्दे वास्तुसौख्यं सम्पूर्णम् ।

*ख-मातृका*

१७३४ वैक्रमे संवत्सरे कर्गदपत्रे लिखिता देवनागरीलिपिवद्धेयं मातृका सरस्वतीभवनपुस्तकालये वाराणस्यां प्राप्यते । इयं नातिसुपाठ्या अपूर्णा चास्ति । अस्याः प्रथमद्वितीयपत्रे अप्राप्ते स्तः ।

**पुष्पिका—**

इति संहिताखण्डं सम्पूर्णः । संवत् १७३४ माघे शुक्लदशम्यां बुधवारे ।

*ग-मातृका*

इयमपि मातृका देवनागरीलिपिवद्धा कर्गदपत्रे च लिखितास्ति । इयं पूर्णा सुपाठ्या चत्वारिंशत्पत्रयुता १८८६ वैक्रमे संवत्सरे लिखितास्ति । इयं मातृका सरस्वतीभवनपुस्तकालये वर्तते ।

---

१. डेविड पिङ्गरे—पूर्वोक्त, पृ० ····११६ ।

पुष्पिका—

सं० १८८६ । शाके १७५१ वैशाखशुक्ल ३ बुधवारे । लि० नन्दराम उपाध्या मानिक्पुरे शिवम् शिवम् शिवम् ।

## ग्रन्थकर्तुः श्रीटोडरमल्लस्य परिचयः

सप्तसिन्धुप्रदेशः अविस्मरणीयानां विभूतीनां जननी वर्तते । एतद्देशप्रसूताः प्रथितयशस्काः जनाः जननीं जन्मभूमिञ्च गौरवान्वितां कृतवन्तः । इतिहासविधातॄणां परम्परायां टण्डनखत्रीकुलोत्पन्नः मल्लोपाह्वयः राजा श्रीटोडरः महाराजस्याकवरस्य राजसभायाः नवरत्नेषु रत्नविशेषः सिन्धुदेशोद्भूतः शंसितः । पञ्चनददेशस्य लोकपरम्परानुसारं प्राचीनविद्वज्जनानुसारञ्च राज्ञः श्रीटोडरमल्लस्य जन्म लाहौर–(लाभपुर) देशेऽभवत् । केचित्तु अस्य जन्म लाहौरस्य चूनियाँसंज्ञके ग्रामेऽभवत् इत्यपि आमनन्ति[1] । अपरमतानुसारं राजा टोडरमल्लः अवधप्रान्तस्य लाहरपुरस्थाने जन्म लब्धवान् । अस्य जननी विधवाऽऽसीत् । अल्पे वयसि वर्तमानः श्रीटोडरः जीवनारम्भं लिपिक इव कृतवान् । परिश्रमकौशलपुरुषार्थैश्च सः मुस्लिमराजसभायां प्रशासकीयपदं प्रतिष्ठाञ्च लब्धवान् ।

महाराजटोडरस्य वंशपरम्परा टोडरानन्दस्य प्रथमभागे सर्गावतारसौख्ये प्राप्यते । तदनुसारं टण्डनोपाह्वये कुले 'वालः' सञ्जातः । तस्मिन् कुलेऽतलि-दामोदर-अस्सू-द्वारकादास-द्विजमल्ल-भगवतीदासाः सञ्जाताः । श्रीटोडरमल्लः भगवतीदासस्य पुत्रः शंसितः[2] ।

श्री टोडरमल्लस्य जनकः तस्य शैशवे एव पञ्चत्वमाप्नोत्[3] । सः

---

१. अकबरी दरबार, भाग ३, ( हिन्दी अनुवाद— रामचन्द्र वर्मा ) पृ० ११९ ।

२ के० एम० के० शर्मा—"टोडरानन्द", जर्नल आफ गंगानाथ झा रिसर्च इन्टीट्यूट, भाग ३, १-४, १९४५, पृ० ६४ ।

३. आइने अकबरी, २, पृ० ३७८ ।

जीविकार्थं १५६१ ख्रीष्टाब्दवर्षे (हिजरी ६७१) मुज़फ्फरखाँमहोदयस्य समीपं लिपिकस्य कार्यमकरोत् । अध्ययने तस्याभिरुचिः अतीवासीत्[1] । १५६२तमे ख्रीष्टाब्दवर्षे (हिजरी ६७०) श्रीटोडरमल्लः महाराजस्याकवरस्य सेवायामागतवान् । गुर्जरदेशस्य बिजयानन्तरमष्टादशवर्षीयोऽयं राजपुरुषः सञ्जातः । अकवरस्य प्रतिनिधिरूपेण सः विहारवङ्गोत्कलदेशान् विजितवान् । द्वाविंशतिवर्षीयः श्रीटोडरः अकवरस्य मन्त्रित्वमवाप्नोत्[2] । १५७० तमे वर्षे (हिजरी ६६० सप्तविंशतिवर्षीयः सः दीवानपदमलङ्कृतवान्[3] । राजस्वमन्त्री भूत्वा सः विभिन्नानि संशोधनानि कृतवान् । प्रथमतस्तेन लेखायाः भाषागतसंस्कारोऽकारि । एतत्पूर्वं हिन्दूलिपिकानाम् (मुहर्रिर) अभिलेखः हिन्दीभाषायां मुस्लिमलिपिकानामभिलेखः फारसीभाषायामासीत । श्रीटोडरः कार्यालयाभिलेखस्य भाषा फारसीभाषा एव भविष्यतीति उद्घोषितवान् । एवं फारसी राजभाषा सञ्जाता । राजपुरुषाणां कर्मचारिणां कृते फारसीज्ञानमनिवार्यं सञ्जातम्[4] ।

भूमिकरविषयकसंशोधनमपि तेन कृतम् । सः कृषिकर्मणि प्रयुक्तेषु भूखण्डेषु करसङ्ग्रहं सस्योत्पादनं विचार्य पृथक् पृथक् कृतवान् । अदेवमातृकायाः क्षेत्रस्य देवमातृकायाः क्षेत्रस्य च करनिर्धारणं पृथगासीत्[5] ।

भूमापनेऽपि संशोधनमभवत् । मापनाय प्रयुक्तं मापनसूत्रं तनावीजरीत्रसंज्ञकं स्थले जले च क्षयं वृद्धिञ्च अवाप्नोति स्म । टोडरमल्लः षष्टिदण्डमानस्य वंशदण्डं कृतवान् । तन्मध्ये लौहश्रृङ्खलाः भवन्ति स्म यस्मात् मापकर्मणि पार्थक्यं न जायते स्म[6] । १५६२ संवत्सरे (हिजरी ६८ )

---

१. तत्रैव, २, पृ० ३७६; अकबरी दरबार, ३, ११६ ।
२. आइने अकबरी, २, पृ० ३७६ ।
३. तत्रैव, पृ० ३७७ ।
४. तत्रैव, पृ० ३७७ ।
५. अकबरी दरबार, ३, पृ० १४६ ।
६. अलबदायूनी—हिस्ट्री आफ इण्डिया, पृ० १६२ ।

श्रीटोडरमल्लः सर्वान् प्रदेशान् द्वादशजनपदेषु विभज्य तेषां दशवर्षीयां करव्यवस्थां कृतवान् । रूप्यकस्य मूल्याङ्कनं चत्वारिंशद् 'दाम' इत्यभवत् । सः परगनाक्षेत्रस्य करनिर्धारणं 'दाम' इति मूल्यानुसारं कृतवान् । १५७०संवत्सरे (हिजरी ९९०) स्वर्णात् ताम्रमुद्रापर्यन्तं संशोधनमभवत् । सैनिकानां वेतननिर्धारणं, तैस्सह मृदुव्यवहारो भवेद्, इत्यपि श्रीटोडरमल्लः कृतवान्[1] । क्रय-विक्रय-करसङ्ग्रह-वेतनादीनां कृते, नृपादीनां कृते च रजतमुद्रा 'टङ्का' आसीत् किन्तु जनसामान्ये दाम इत्यस्य प्रचलनमासीत्[2] । एवं श्रीटोडरः देशस्यार्थनीतिं निर्धारितवान् ।

श्रीटोडरमल्लः कुशलप्रशासक आसीत् । अनुशासनप्रियस्य टोडरस्य उग्रस्वभावात् प्रबलविरोधोप्यभवत् । एकः स्वजातीयः खत्रीजनः तस्य वधस्य प्रयत्नं कृतवान् । अकबरस्य निकटस्थौ राजपुरुषौ अबुलफज़ल-अलबदायूँनीसंज्ञकौ टोडरस्य प्रखरविरोधिनो आस्ताम् । श्रीटोडरमल्लः १५७८ वर्षे एकादशीतिथौ (९९८ हिजरीसंवत्सरे) पञ्चत्वं प्राप्नोत्[3] ।

एवं विलक्षणप्रतिभासम्पन्नः उग्रस्वभावोऽनुशासनप्रियः कर्मणि कुशलः श्रीटोडरमल्लः आलोचकैः निन्दितोऽपि प्रशंसितः आसीत् । सः मुगलराज्यस्य भूषणं शंसितः । खुलास-तुल-तवारीख ग्रन्थानुसारं श्रीटोडरः प्रशासनस्य, अर्थव्यवस्थायाः लेखाभिलेखस्य कार्यालयस्य च मर्मज्ञः आसीत् । सः मन्त्री-राजपुरुष-नृप-सैनिकादीनां कृते नियमान् अकरोत्[4] । अस्य कार्यकालः १५६५ मितादब्दात् १५८९ खीष्टाब्दं यावदासीत्[5] ।

---

१. अकबरी दरबार, ३, पृ० १४१-१४२ ।

२. तत्रैव, पृ० १४९ ।

३. आइने अकबरी, २, पृ० ३७७ ।

४. अकबरी दरबार, ३, पृ० १४८ ।

५. डेविड पिङ्गरे—"ज्योतिष शास्त्र, आँस्ट्रल एण्ड मैथमेटिकल, लिटरेचर", ए हिस्ट्री आफ इन्डियन लिटरेचर, भाग ६ (४), पृ ११६ ।

## वास्तुसौख्यस्य वर्ण्यविषयः

प्रकृतमातृका टोडरानन्दग्रन्थस्य ज्योतिषखण्डस्यांशभूतास्ति । वास्तुसौख्यस्य प्रतिपाद्यं शालाप्रकल्पनमस्ति । ग्रन्थस्यारम्भः मङ्गलाचरणेन भवति । तत्र वसिष्ठगर्गब्रह्मविश्वकर्मविराहलल्लादीनां स्मरणं कृतमस्ति । ग्रन्थे विभिन्नप्रसङ्गेषु प्रायः ऐतेषां मतानि उद्धृतानि सन्ति ।

वास्तुशास्त्रस्य मूलतः पञ्चसिद्धान्तः सन्ति । वास्तु-पदविन्यासः, दिक्साम्मुख्यं प्राचीसाधनं वा, मानम्, आयादिषड्वर्गाः, पताकादिषट्-छन्दासि च[1] ग्रन्थे सर्वं महद् विजृम्भितमस्ति ।

वास्तुप्रकल्पनार्थं भूमिचयनमावश्यकं भवति । भूचयनाय भूमि-परीक्षा कार्या । भूमिपरीक्षा गन्धैः वर्णैः रसैः प्लवैश्च विधीयते । एतदति-रिक्तं गर्तपूरणेन, पुष्पस्य म्लानाम्लानभावेन, भूम्यामुत्पन्नैः कुशादिभिः, वीजवपनेव तेषामङ्कुरणेन च भूमिपरीक्षा विहितास्ति । तत्र स्थितैः वृक्षैश्च भूम्याः अनुकूलता विचारणीया भवति ।

भूमिपरीक्षणानन्तरं शल्यशोधनं कार्यं भवति । सूत्रप्रसारणसमये शकुनैः, निमित्तशल्यैः प्रश्नवर्गशल्यैश्च शल्यं विज्ञाय भूमिशोधनं कल्प्यते ।

भूमिशोधनं कृत्वा तत्र वास्तुमण्डलं प्रकल्पयेत् । प्रसङ्गेऽस्मिन् पुरुषवास्तु-नागवास्तु-ग्रहवास्तु कलशवास्तु-प्रभृतीनां वर्णनं प्राप्यते ।

दिक्ज्ञानार्थं शङ्कुस्थापनस्य विधानं वर्तते । शङ्कुः वास्तुनरस्य कुक्षौ न्यस्तो भवति । शङ्कुप्रकल्पनं वृक्षविशेषेण भवति । शङ्कुमेवं प्रकल्पयेत्—

'शङ्कुं त्रिधा विभज्याद्यं चतुर्वक्त्रं द्वितीयकम् ।
अष्टास्त्रकं तृतीयांशं लिङ्गाकारं ऋजु शुभम्'[2] ।।

---

१ द्वि० ना० शुक्ल—समराङ्गणीय भवननिवेश, पृ० ३० ।
२. वास्तुसौख्यम्—४४४,४४५ ।

वास्तुकर्मणि मापनाय सूत्रस्य प्रयोगो विहितोऽस्ति । विप्राय दर्भजं सूत्रं, क्षत्रियाय मौञ्जसूत्रं, वैश्याय कार्पाससूत्रं, शूद्राय च शणसूत्रं शंसितम् । प्रमितिः स्वामिकरेण कार्या । यत्र हस्तमितिः असम्भवा भवेत् तत्र अङ्गुलमानस्य दण्डमानस्य च प्रयोगो भवेत् ।

आयादिषड्वर्गे आयव्यययोः अंशस्य ऋक्षस्य योनेः तिथिवारस्य च विचारो भवति[1] ।

वास्तुसौख्येऽष्टाङ्गायस्य (ध्वजधूमसिंहश्वाखरवृषकुञ्जरध्वांक्षाणां); त्र्यङ्गव्ययस्य (पिशाचराक्षसयक्षाणां); त्रयांशस्य (इन्द्रयमनृपाणां) सप्तविंशतिसंख्याकानाम् ऋक्षाणां, तिथिवारादीनां च सम्यग् विवेचनं प्राप्यते ।

## शालाविन्यासः

भवने शालाविन्यासः वास्तुसौख्यस्य प्रमुखः प्रतिपाद्यो विषयोऽस्ति ।

प्रथमतः उत्तममध्यमाधमादिभेदैः नृपस्य, महिष्याः, युवराजस्य अनुजसामन्तसचिवाध्यक्षाधिकृतानाञ्च पञ्चगृहाणां चातुर्वर्ण्यस्य गृहाणां च प्रमाणपूर्वकं वर्णनं प्राप्यते । तदनन्तरं भवनस्याङ्गभूतानां शालालिन्दभित्तिद्वारवीथिकास्तम्भादीनां विवेचनं प्राप्यते ।[1] स्तम्भे कलशकमलभारतुलोपतुलातुलोपतुलाप्रभृतीनां विजृम्भणमस्ति ।

भवनेषु चतुश्शालत्रिशालद्विशालैकशालभवनानि प्रचलितानि सन्ति । चतुश्शालगृहेषु सर्वतोभद्र-नन्द्यावर्त-वर्धमान-स्वस्तिक-रुचकप्रभृति-

---

१. द्वि० ना० शुक्ल—समराङ्गणीय भवननिवेश, पृ० ३६ ।

२. शालाशब्देन गृहाभ्या [? भ्यन्तर] मुच्यते । अलिन्दशब्देन शालाभित्तेर्बाह्ये या गमनिका दृगाङ्गणं सम्मुखीक्रियते सा ज्ञेयेत्युत्पलः । प्रतिशालाख्यमिति महादेवः । 'प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठक' इत्यमरः । ...... शाला त्रिभागतुल्या कर्तव्या वीथिका बहिर्भवनात् ।

—वास्तुसौख्यम्

गृहाणि पठितानि सन्ति । त्रिशालभवनानां हिरण्यनाभ-सुक्षेत्र-चुल्ली-पक्षघ्नभेदाः सन्ति । सिद्धार्थ-यमसूर्य-दण्डाख्य-वाताख्य-गृहचुल्ली-काच-गृहाणि द्विशालगृहाणि शंसितानि ।

आकृत्यनुसारं शालाः आयतचतुरस्रवृत्तभद्रासनचक्रविषमबाहु-त्रिकोणशकटदण्डपणवसंस्थानमुरजबृहन्मुखव्यजनकूर्मपृष्ठचापसर्पाः षोडशविधाः भवन्ति ।

वसिष्ठस्य मतानुसारमेकतो दशशालपर्यन्तं गृहाणि भवन्ति । अलिन्दभेदेन प्रत्येकस्य षोडशभेदाः शंसिताः । सर्वेषां योगेन शतविधगृहाणि भवन्ति । भवनप्रकल्पने षोडश भेदाः लघुगुरुपदेन प्रकीर्तितः । लघुः अलिन्दार्थे गुरुश्च शालार्थे प्रयुज्यते । विधिरियं वास्तुसौख्ये एवं विद्यते—

**'गुरोरधो लघुः स्थाप्यः पुरस्तादूर्ध्ववन्न्यसेत् ।**
**गुरुभिः पश्चिमं पूर्यं सर्वलघ्ववधिर्विधिः ।।'**

—वास्तुसौख्यम्—२३६ श्लोक

शालालिन्दयोः स्थितिः अभिधानञ्च एवं भवति—ध्रुवं, धान्यं, जयं, नन्दं, खरं, कान्तं, मनोरमं, सुवक्त्रं, दुर्मुखं, क्रूरं, विपक्षं, धनदं, क्षयम्, आक्रन्दं, विपुलं, विजयम् । इमे एकविधगृहस्य षोडशप्रकाराः सन्ति । एवमन्येषामपि भेदाः कर्तव्याः ।

एकशालभवनस्य द्वारभेदेन भेदाः भवन्ति—विश्वतोमुख-पुण्डरीक-श्रीनिलय-शूकर-व्याघ्र-शेखराः ।

द्विशालभवनस्य शालानां स्थित्यनुसारं भेदाः सन्ति—कमलाकरा श्वापदः सर्पदंष्ट्रिका मङ्गलाप्रदा च । ग्रन्थकारः द्विशालभवनानि 'प्रयत्नात् परिवर्जयेत्' इति शब्दैः निषिद्धवान् ।

द्वारालिन्दवशेन चतुश्शालभवनानि गृहराट् कुबेर-महेन्द्र-वारुण-चन्द्रशेखर संज्ञकानि शंसितानि । एवं ग्रन्थे शालानियोजनं वर्णितमस्ति ।

## गृहे कक्षप्रकल्पनम्

भवने वेश्मनिवेशः दिगनुकूलं प्रकल्पनीयो भवति। ऐन्द्रकोणे स्थानगृहं (स्नानगृहं वा), आग्नेयकोणे पचनालयं, याम्ये शयनगृहं, नैर्ऋत्ये शस्त्रमन्दिरं, वारुणे भोजनगृहं, वायव्यकोणे धनमन्दिरमुदीच्ये हाटकसद्म, ईशाने देवमन्दिरं, पूर्वाग्नेययोर्मध्ये मथनगृहं, आग्नेययाम्ययोर्मध्ये घृतमन्दिरं, यमनैर्ऋत्ययोर्मध्ये पुरीषत्यागमन्दिरं, नैर्ऋत्यवारुणयोर्मध्ये विद्याभ्यासमन्दिरं, वारुणवायव्ययोर्मध्ये रोदनमन्दिरं, वायव्योत्तरयोर्मध्ये कामोपभोगसदनं, उत्तरेशानयोर्मध्ये चिकित्सामन्दिरं, पूर्वेशानयोर्मध्ये सर्ववस्तुसंग्रहगृञ्च कल्पयेत्। अथवोत्तरस्यां भाण्डागारः भवेत्। अपरमतानुसारं उत्तरे जलस्थानं, पूर्वस्यां श्रीगृहं कारयेत्। गवाक्षप्रकल्पनं पश्चिमे दक्षिणे च भवेत्। एवं वास्तुसौख्ये विविधकक्ष्याणां स्थितिः वर्णिता।

## वास्तुमण्डलं वास्तुपुरुषश्च

भवननिर्मितेः पूर्वं वास्तुपूजनस्य विधानं प्राप्यते। भूमौ चतुष्षष्टिपदवास्तुमण्डलमेकाशीतिपदवास्तुमण्डलं वा कल्पयेत्। पदेषु देवानां प्रतिष्ठा कार्या। एकाशीतिपदवास्तुमण्डले नवकोष्ठेषु मध्यस्थो देवः ब्रह्मा वर्तते। ब्रह्माणं परितः अर्यमा सविता विवस्वान् इन्द्रश्च भवन्ति। कोणेषु आपः सावित्रः जयः रुद्रश्च स्थिताः भवन्ति। वास्तुमण्डलं त्रयोदशसुराः अन्तःस्थाः, द्वात्रिंशद्बाह्यकोष्ठस्थाः शंसिताः। वास्तुमण्डलाद् बहिः कोणेषु पदवर्जिताः ग्रहादयो कार्याः। ते सन्ति- चरकी, विदारी, पूतना, पापराक्षसी, स्कन्दो, यमो, जम्भः, पिलिपिच्छा च। देवानां स्थितिः एवमेव चतुष्षष्टिवास्तुमण्डले भवति। देवानां पदसंख्या एव पृथक् भवति।

वास्तुमण्डले वास्तुदेवस्य पुरुषाकारकल्पनं भवति। वास्तुनरमवाङ्मुखं कल्पयेत्। शिखी देवः शिरसि भवति। आपः मुखस्थानीयः, अर्यमा आपवत्सश्च स्तनस्थानीयौ, पर्जन्यादयो देवाः नेत्रश्रवणादिषु स्थिताः, भुजयोः हस्तयोः सत्यादिदेवाः, वितथगृहक्षतौ पार्श्वयोः, जठरे

विवस्वान्, उरुजानुजङ्घादिषु यमादयः, हृदये ब्रह्मा, मेढ्रे शक्रजयन्तौ शंसिताः सन्ति । एवं वास्तुनरस्य कल्पनं भवति ।

## मर्मवेधः

वास्तुमण्डलप्रकल्पने वास्तुनरप्रकल्पने च प्रयुक्ताः रेखाः वास्तुनरस्य शिरः भवन्ति । 'शिराशब्देन पूर्वापरायताः दक्षिणोत्तरायताश्च दश दश रेखाः ज्ञेयाः' इत्युक्तं वास्तुसौख्ये । शिराप्रकल्पने 'सूत्राणां परस्परसम्पाते मर्मस्थानं ज्ञेयम्' इति वास्तुसौख्ये मर्मस्थानं वर्णितम् । 'शिरापार्श्वमानं' वंशो भवति । वंशः अङ्गुलविस्तीर्णः शंसितः । एते वास्तुनरस्य मर्म-स्थलानि भवन्ति । वास्तुनिर्मितिप्रसङ्गे एतेषां वेधो ध्यातव्यो भवति । अत्र निर्मितिः अशुभा शंसिता ।

## द्वारनिर्णयः

गृहं नवभागं कृत्वा पञ्चभागं दक्षिणे त्रिभागं वामतः कृत्वा शेषं द्वारं प्रकल्पयेत् । देवालये विहारे मण्डपे प्रतोल्यां मखे च द्वारं मध्ये निवेशयेत् । गृहे च मध्यद्वारप्रकल्पनमशुभं भवति । ग्रन्थे द्वारफलानि विजृम्भितानि सन्ति ।

### द्वारवेधः

द्वारवेधः प्रयत्नेन वर्जनीयो भवति । द्वारस्य सम्मुखावस्थितं पङ्कमार्गवृक्षकोणस्तम्भकूपजलनिर्गमान् परित्यजेत् । किन्तु द्वारोच्छ्राया-द्विगुणितां भूमिं त्यक्त्वा वहिः स्थिताः एते दोषकारिणः न भवन्ति । द्वारवेधस्य फलमपि ग्रन्थे दृश्यते ।

### द्वारदोषः

मूलद्वारस्य स्वयमुद्घाटनं, स्वयं पिधानं, मानाधिक्यं, नीचं द्वारं, द्वारस्योपरि द्वारम्, कुब्जद्वारं, उदुम्बरेणातिपीडितं द्वारं, मध्यविपुलं मुरजानुकारं द्वारञ्च दोषपूर्णद्वाराणि भवन्ति ।

*द्वारभूषा*

मूलद्वारं घटफलपत्रप्रमदादिभिः अलङ्कुर्यात् । द्वारस्यालङ्करणं शोभार्थं मङ्गलार्थं वा भवति ।

मातृकायां वास्तुकृत्यारम्भे मास-पक्ष-राशि-तिथि-नक्षत्रादीनां महद्-विजृम्भणं विलोक्यते । शुभकाले शङ्कुस्थापनं शिलान्यासः स्तम्भोच्छ्रयः च भवेत् । ग्रन्थस्य समापनं वास्तुपूजनेन भवति ।

## वास्तुसौख्यस्य भाषा

वास्तुसौख्यस्य भाषातीव सरलास्ति । विषयस्य प्रतिपादनं लघु-वाक्यैः कृतमस्ति । गृहनिर्माणे विविधप्रसङ्गेषु भूमिचयन-भूमिशोधन—शिलान्यास शालानिर्मिति-द्वारोच्छ्रायादिषु वराह-लल्लगर्गप्रभृतीनां वास्तु-विशारदानां मतानि उद्धृत्य ग्रन्थकारः तेषां व्याख्यां टिप्पणञ्च करोति । प्राप्तेषु च विभिन्नमतेषु आत्मनः पक्षं प्रस्तौति । ग्रन्थेऽस्मिन् वराहस्य मतं सर्वाधिकं स्वीकृतमस्ति ।

ग्रन्थे वाक्यरचना नातिक्लिष्टास्ति । लघुवाक्यानां प्रचलितशब्द-नाञ्च प्रयोगो वर्तते । वर्णविपर्ययः ग्रन्थे विभिन्नस्थलेषु दृश्यते । 'नालिकेरः' [नारिकेलः], 'यजन्तः' [जयन्तः], 'शुल्कः' [शुक्लः] प्रभृति-शब्दाः वर्णविपर्ययस्योदाहरणानि सन्ति ।

वास्तुशिल्पग्रन्थाः भाषामधिकृत्य विद्वद्भिः बहुशः आलोचिताः सन्ति । पाश्चात्यविचारकस्य कीथमहोदयस्य मतानुसारं संस्कृतसाहित्ये शिल्पस्थापत्ययोः बहुग्रन्थाः सन्ति किन्तु तेषां भाषा संस्कारयुता परिष्कृता नास्ति[१] । एवं एलिसवोनरमहोदया शिल्पग्रन्थानां दोषयुतायाः भाषायाः उल्लेखं कुर्वतो वास्तुसूत्रोपनिषदि भूमिकाभागे लिखति यत् शिल्पग्रन्थानां

---

१. ए० बी० कीथ—ए हिस्ट्री ऑफ संस्कृत लिटरेचर (आक्सफोर्ड, १९२८) पृ० ६४ ।

भाषा संस्कारदृष्ट्या बहुदोषान्वितास्ति । तेषु प्रयुक्ताः पारिभाषिका-शशब्दाः तेषामर्थाः व्याकरणसम्मताः न सन्ति[1] ।

अयमपि ग्रन्थः वास्तुशिल्पग्रन्थानामन्यतमः तस्मात् अस्य भाषा प्राञ्जतो षिणी नास्ति । ग्रन्थेऽस्मिन् संस्कृतभाषा सुसंस्कृता परिष्कृता न दृश्यते । मूलग्रन्थस्य सहजस्वरूपे विकृतिर्न जायेत् इति कृत्वा अस्य मूलपाठः मया यथावत् स्वीकृतः, अत्यर्थेन न संशोधितः । अपितु, ग्रन्थस्य सुखाववोधनाय ऊहाः मूलपाठेन सह यथावसरं पृथक्तया च परिशिष्टे प्रस्तुतः यथा श्लोकेऽस्मिन् [८८] चतुर्थपादः स्पष्टो नास्ति—

**घटझष स्यान्द्रन्द्रः [?] खातं प्रसिद्धम् ।**

अस्य स्पष्टभाववोधाय एवमुह्यते—

**अजघटझषराशौ निर्ऋतेः खातं शस्तम् ।**

अथवा—

**अजघटझषराशौ नैर्ऋतेः खातमुक्तम् ।**

ऊहोऽयं श्रद्धेयैः डा० गयाचरणत्रिपाठिमहाभागैः (प्राचार्याः, गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठम्] कृतः । एवं तैः कृतः ऊहोऽयमप्यस्ति ।

**पुण्डरीकं भवेन्नाम सर्वकामफलप्रदम् ।**

मूलपाठोऽस्ति—

**पुण्डरीकं नाम भवेत् सर्वकामफलप्रदम् ।**

एवमन्यस्थलेष्वपिशब्दानामूहाः तैः कृताः सन्ति ।

लिपिकारकृताः दोषाः अपि मातृकासु सन्ति तथापि मूलग्रन्थेऽपि भाषाग दोषः आसीदिति असन्दिग्धमेव सर्वासु मातृकासु सामान्यपाठोप-लब्धत्वात् ।

---

१. एनिस बोनर—वास्तुसूत्र उपनिषद्, भूमिका, पृ० २ ।

## कृतवेदिताभावाञ्जलिः

ग्रन्थसम्पादनं ज्ञानयज्ञस्यायोजनं भवति । अस्य निर्वहणं साहाय्यं विना दुष्करमस्ति । मम प्रथमपुष्पाञ्जलिः भगवतः शिवस्य पादाम्बुजयोर्पितोऽस्ति यस्यानुग्रहेण मम कार्यं सम्पन्नमभवत् । सारस्वतयज्ञेऽस्मिन् पुरोहितेषु ब्रह्मा इव योगक्षेमस्य धारकान् गङ्गानाथझाविद्यापीठस्य प्राचार्यवर्यान् त्रिपाठ्युपाह्वययुतान् डॉ० गयाचरणमहाभागान् प्रति अहं श्रद्धावनतास्मि, येषां स्वीकृतिपूर्वकमर्थप्रदानेन ग्रन्थः प्रकाशितो जातः। ग्रन्थग्रन्थिविमोचनेऽपि तेषां साहाय्यमनेकधा लब्धवती, अतः तेषां साहाय्यतिशयार्थं कथं तान् प्रति कार्तज्ञमर्पयामि इत्यहं न जाने ।

कार्यारम्भः तात्कालिकानां प्राचार्यवर्याणां डॉ० जगन्नाथपाठकानामनुशंसनेनाभवत्, अतोऽहं तान् प्रति धन्यवादं ज्ञापयामि ।

वेदविभागस्याध्यक्षाः डॉ० मायामालवीयमहोदयाः अग्रजाः इव पदे-पदे मां मार्गं प्रदर्शितवत्यः । तासां साहाय्यं विना ग्रन्थस्य प्रकाशनमतीवकठिनमासीत् । अतः महाभागाः ताः मया भूयोऽभिवन्द्याः ।

वास्तुविषयकेषु ज्योतिषप्रसङ्गेषु ग्रन्थिविशरणे मामुपाकुर्वन्तः ज्योतिर्विदः डॉ० सर्वनारायणझामहाभागाः (प्रवक्ता, गङ्गानाथझाकेन्द्रीय-संस्कृतविद्यापीठम्) भूयशः धन्यवादार्हाः सन्ति ।

ग्रन्थे गणितप्रसङ्गेषु विषयाववोधने मम जीवनसहचरः डॉ० राधेकृष्णपाण्डेयः [प्रवक्ता, गणित, सेन्ट एन्थोनी गर्ल्स इण्टर कालेज] सहयोगं कृतवान् । अहं तमपि कृतवेदितां ज्ञापयामि ।

सहोदरकल्पेभ्यः सुहृदवर्येभ्यः पाण्डेयोपनामयुतेभ्यः डॉ० प्रकाशेभ्यः मुहुर्मुहुः धन्यवादान् ज्ञापयामि येषां सहयोगेन मम कार्यं अनतिदुष्करं जातम् । तेषां विस्मरणं प्रसङ्गेऽस्मिन् मम कृतघ्नता भविष्यति ।

विद्यापीठीयसङ्ग्रहालयस्याध्यक्षाः श्रीजीवेश्वरझामहाभागाः स्व-

विभागेन सह पुस्तकालयस्य सर्वे कर्मचारिणोऽधिकारिणः, सरस्वतीभवन-पुस्तकालयस्याध्यक्षः तस्य सहयोगिनश्चापि पुस्तकप्रदानार्थं धन्यवादार्हाः सन्ति ।

अल्पकालेन एव मनोहरमुद्रणार्थं शाकुन्तलमुद्रणालयस्य श्रीयुतान् उपेन्द्रत्रिपाठिमहोदयान् धन्यवादं ज्ञापयामि ।

अन्ततः ते सर्वे धन्यवादार्हाः ये प्रत्यक्षं परोक्षं वा मम सहयोगं कृतवन्तः । कार्येऽनवधानतया अज्ञानतया वा यत्स्खलनं जातं तस्य कृते क्षमां प्रार्थयेऽहं सुधीन् ।

१ मार्च, १९९३ विदुषां वशंवदा

शैलजा पाण्डेय

# विषय-सूची

| विषयाः | | पृष्ठानि |
|---|---|---|

अथ

## टोडरानन्दान्तर्गतम्

# ॥ वास्तुसौख्यम् ॥

॥ श्रीगणेशाय नमः ॥

यन्नामस्मरणाद्यान्ति, विलयं विघ्नसञ्चयाः ।
तन्नमस्ये गणाधीशं, भजद्भ्यो बुद्धिदायकम् ॥१॥

यत्पादाम्बुजमाध्वीकं संसेव्याप्तसन्मतिः ।
जयत्येष गुरुः साक्षादनन्तो भक्तवत्सलः ॥२॥

गोविन्दपादकमलद्वययोजितमानसः ।
गृहसौख्यं तनोत्येष, श्रीटोडरमहीपतिः ॥३॥

वसिष्ठगर्गब्रह्मोक्तं, विश्वकर्मादिनिर्मितम् ।
वराहलल्लव्याख्यातं, शास्त्रतत्त्वं विमृश्य च ॥४॥

निरूपयामो विदुषां, सन्तुष्ट्यै वास्तुनिर्णयम् ।
यथामति धनारोग्यसौख्यकीर्तिविवृद्धये ॥५॥

अथ त्रिविधप्रवेशनिरूपणावसरेऽपूर्वसंज्ञः प्रथमः प्रवेश इत्युक्तम् । तत्रापूर्वप्रवेशोऽपूर्वगृहनिर्माणायतद्विति [?] गृहनिर्माणजिज्ञासावसरप्राप्तं गृहारम्भसौख्यं विविच्यते । तत्र वसिष्ठः—

वास्तुज्ञानं प्रवक्ष्यामि यदुक्तं ब्रह्मणा पुरा ।
ग्रामसद्मपुरादीनां निर्माणं सूक्ष्मतोऽधुना ॥६॥

तस्य प्रयोजनमाह भविष्यपुराणे—

**गृहस्थस्य क्रियाः सर्वा न सिद्ध्यन्ति गृहं विना ।**
**यतस्तस्माद् गृहारम्भप्रवेशसमयौ ब्रुवे ।।७।।**

न सिद्ध्यन्ति स्वल्पफला विफला वा भवन्तीत्यर्थः । गृहं स्वसत्ताकं तदुक्तम् तत्रैव—

**परगेहे कृताः सर्वाः श्रौतस्मार्तक्रियाः शुभाः ।**
**विफलाः[1] स्युर्यतस्तासां भूमीशः फलमश्नुते ।।८।।**

विशेष स्मृतिभ्योऽनुसन्धेयः ।

## ।। अथ वास्तुस्वरूपम् ।।

आह वराहमिहिरः[2]—

**किमपि किल भूतमभवद्रुन्धानं रोदसी शरीरेण ।**
**तदमरगणेन सहसा विनिगृह्याधोमुखं न्यस्तम् ।।९।।**
**यत्र च येन च[3] गृहीतं विबुधेनाधिष्ठितः[4] स तत्रैव[5] ।**
**तदमरमयं विधाता वास्तुनरं कल्पयामास ।।१०।।**

बृहस्पतिः—

**पुरा त्रेतायुगे ह्यासीन्महाभूतं समुपस्थितम् ।**
**व्याप्नुवन्तं शरीरेण सकलं भुवनं ततः ।।११।।**
**तं दृष्ट्वा विस्मयं देवा गताः सेन्द्राः भयावृताः ।**
**ततस्ते क्रोधसन्तप्ता[6] गृहीत्वा तं महासुरम् ।।१२।।**

---

१. निष्फला—*ख*; फला—*ग* ।
२. बृहत्संहिता, ५३।२,३ ।
३. *ग*-मातृकायां पाठो नास्ति ।
४. विबुधेनावस्थितः—*ख, ग* ।
५. *ग*-मातृकायां पाठो नास्ति ।
६. क्रोधसन्तप्तैर्गृहीत्वा—*ग* ।

विनिक्षिप्तमधोवक्त्रं स्थितास्तत्रैव ते सुराः[1] ।
तमेव वास्तुपुरुषं ब्रह्मा समभिकल्पयत् ॥१३॥

## ॥ अथ भूमिपरीक्षा ॥

तत्र नारदः—

क्षेत्रमादौ परीक्ष्येत[2] गन्धवर्णरसप्लवैः ।
सुमध्वाज्यान्न[3] पिशित[4]गन्धं विप्रानुपूर्वकम् ॥१४॥

सितेषद्रक्तहरित[5] कृष्णवर्णा यथाक्रमात् ।
मधुरं कटुकं तिक्तं काषायरससन्निभम् ॥१५॥

अत्यन्तवृद्धिदं नृणामीशानप्रागुदकप्लवम् ।
अन्यदिक्षुप्लवं[6] तेषां शश्वदत्यन्तहानिदम् ॥१६॥

तत्रारत्निमितं[7] गर्तं खनित्वान्तः प्रपूरयेत् ।
अत्यत्र वृद्धिरधिके हीने हानिः समे समः ॥१७॥

तथा निशादौ तत् कृत्वा पानीयेन प्रपूरयेत् ।
प्रातर्दृष्टे जले वृद्धिः समं पङ्के व्रणे क्षयः ॥१८॥

एवं लक्षणसंयुक्ते क्षेत्रे सम्यक् समीकृते ।
दिक्साधनाय तन्मध्ये सममण्डलमालिखेत् ॥१९॥

दिक्साधनं त्वस्मदुक्तगणितसौख्ये त्रिप्रश्नप्रकरणे द्रष्टव्यम् । दिक्साधनं विना निर्मित[8]गृहमशुभफलमित्याह विश्वकर्मा—

प्रासादे सदनेऽलिन्दे द्वारे कुण्डे विशेषतः ।
दिङ्मूढे कुलनाशः स्यात्तद्वशात्साधयेद्दिशः[9] ॥२०॥

---

१. तेऽसुराः—ख ।
२. परीक्षेत्—क ।
३. ज्यान्यम्—ग ।
४. पिशितम्—ग ।
५. सितेयद्रक्त—क ।
६. अन्यदिक्षुत्प्रवम्—क ।
७. हस्तमितम्—क ।
८. निर्मितम्—ग ।
९. द्विशः—ग ।

इति वराहसंहितायाम्[1]—

शस्तौषधिद्रुमलता मधुरा सुगन्धा ।
शस्ता समा न सुषिरा च मही[2] नराणाम् ।।२१।।

अप्यध्वनि श्रमविनोदमुपागतानाम् ।
धत्ते श्रियं किमुत शाश्वतमन्दिरेषु ।।२२।।

टीका[3]—शस्तौषधयो जयन्ती[4]पुत्रजीवादयो, द्रुमाश्च यज्ञियाः पलाशाश्वत्थादयः[5] लताश्च श्यामादयः ।

मधुरा लवणरसरहिता, सुषिरा मूषकादिबिलरहिता अजर्जरा वा ।

सचिवालयेऽर्थनाशो धूर्तगृहे सुतवधः समीपस्थे ।
उद्वेगो देवकुले चतुष्पथे भवति चाकीर्त्तिः ।।२३।।

चैत्ये भयं[6] ग्रहकृतं[7] वल्मीकश्वभ्रसङ्कुले[8] विपदः ।
गर्तायां तु पिपासा कूर्माकारे धनविनाशः[9] ।।२४।।

चैत्यो ग्रामप्रधानवृक्षः । चैत्येषु भूतेभ्यो भयं भवति वास्तुनीतिबृंहस्पतिनाभिहितत्वात् । श्वभ्रं बिलम् । गर्ता निम्नतरा भूः ।

उदगादिप्लवमिष्टं विप्रादीनां प्रदक्षिणेनैव ।
विप्रः सर्वत्र वसेदनुवर्णमथेष्टमन्येषाम् ।।२५।।

गृहमध्ये हस्तमितं खात्वा परिपूरितं पुनः श्वभ्रम् ।
यद्यूनमनिष्टं तत्समे समं धन्य[10]मधिकं यत् ।।२६।।

---

१. बृहत्संहिता, ५३।८८, ८९, ९० ।
२. अममी नराणाम्—क, चममीनराणाम्—ग ।
३. क ।
४. डनयन्ती—क ।
५. ख ।
६ चैपल्ये भयं—क. चैत्रे भवम्—ग ।
७. गृहकृतम्—ग ।
८. सङ्कुलम—ग ।
९ बृहत्संहिता, ५३।९० ।
१०. धान्य—क ।

श्वभ्रमथवाम्बुपूर्णं पदशतमित्वा गर्तस्य यदि नोनम् ।
तद्धन्यं[1] यश्च[2] भवेत्पलानि यां स्वाटकं[3]चतुष्षष्टिः[4] ॥२७॥

श्वभ्रं[5] पूर्वोक्तगर्तम्[6], इत्वा गत्वा, यां स्वाटकम् इति गर्तसम्बन्धि-शुष्कमृत्तिका । मत्स्यपुराणे[7] परीक्षान्तरम्—

अरत्निमात्रे गर्ते वै स्वनुलिप्ते तु सर्वतः ॥२८॥

घृतमीमशरावस्थं कृत्वा वर्तिचतुष्टयम् ।
ज्वालयेद् भूपरीक्षार्थं सम्पूर्णं सर्वदिग्मुखम् ॥२९॥

पूर्वादि गृह्णीयाद्वर्णानामनुपूर्वशः ।
वास्तुसामूहिको नाम्न दीप्यते यस्तु सर्वशः ॥३०॥

शुभदः सर्ववर्णानां[8] प्रासादेषु गृहेषु च ॥३१॥

पुनर्वराहः[9]—

श्वभ्रोषितं न कुसुमं यस्मिन् प्रम्लायते तु वर्णसमम् ।
तत्तस्य भवति शुभदं यस्य च यस्मिन्मनो रमते ॥३२॥

कुशयुक्ता[10] शरबहुला[11] दूर्वाकाशान्विता क्रमेण मही ।
अनुवर्णं वृद्धिकरी मधुरकषायाम्लकटुका[12] च ॥३३॥

पुनर्मत्स्यपुराणे[13]—

हलकृष्टेऽथवा देशे सर्वबीजानि वापयेत् ॥३४॥

त्रिपञ्चसप्तरात्रेण यत्र रोहन्ति तान्यपि ।
ज्येष्ठोत्तमा कनिष्ठा भूर्वर्जनीयेतरा मता ॥ इति ॥३५॥

---

१. तद्धनम् ग ।
२ यत्र—ख ।
३. वनुपष्ठिः—ख ।
४. बृहत्संहिता, ५३।९१-३ ।
५ श्वभ्राम्—क, ख ।
६. मर्तम्—क, ग ।
७. मत्स्यपुराण २५३।१३-१६ ।
८. सार्ववर्णानाम्—क ।
९. बृहत्संहिता, ५३।९५ ।
१०. कुशलयुक्ता—क, ग ।
११. शर्वहुला —ग ।
१२. मधुरकषाम्लकटुका—ग ।
१३. मत्स्यपुराण, २५३।१७, १८ ।

पुनर्वराह[1]—

यास्यादिष्वशुभफलप्रदास्तरवः [तरवः] प्रदक्षिणेनैते ।
उदगादिषु प्रशस्ताः प्लक्षवटोदुम्बराश्वत्थाः ॥३६॥

आसन्नाः कण्टकिनो रिपुभयदाः क्षीरिणोऽर्थनाशाय ।
फलिनः प्रजाक्षयकरा दारुण्यपि वर्जयेदेषाम् ॥३७॥

फलिनः फलप्रधाना आम्रादयः । एषामित्युपलक्षणमपरेषामपि निन्द्यवृक्षाणाम् ।

छिन्द्याद्यदि न तरूंस्तांस्तदन्तरे पूजितान्वपेदन्यान् ।
पुन्नागारिष्[ष्ट]शोकपनसबकुलान् शमीपगाशौ[शमीशालौ][2] ॥३८॥

राजमार्तण्ड :—

यत्र तत्र स्थिताः वृक्षाः बिल्वदाडिमकेसराः ।
पनसो नालिकेरश्च [नारिकेलश्च] शुभं कुर्वन्ति नित्यशः ॥३९॥

जयन्तीदाडिमारिष्टान् परित्यज्य शमीं सदा ।
अपि हेममयान् वृक्षान् वास्तुमध्ये न रोपयेत् ॥४०॥

तत्र तत्र स्थिताः वृक्षाः जनयन्ति शुभोदयम् ।
प्रियङ्गुबिल्वपुन्नागशिरीषाशोककेसराः ॥४१॥

पुन्नागो नागकेसरः । केसरो वकुलः ।

अश्वगन्धश्च कन्दश्च कदलीबीजपूरकः ।
गृहे यस्य प्ररोहन्ति स गृही न प्ररोहति ॥४२॥

बोधिग्रहः प्राक् प्रकरोति नैःस्वम्[3] ।
प्लक्षोऽपि रोगं[4] दिशि दक्षिणस्याम् ॥

---

१. बृहत्संहिता, ५३।८५, ८६ ।
२. बृहत्संहिता, ५३।८७ ।
३. प्राकल्पकरोति नैख्यम्—ग ।
४. पिनोगम्—ख ।

**भवेद्वटः स्त्रीकुलहा प्रतीच्याम् ।**
**उदुम्बरेऽप्युत्तरतो न वृद्धिः ॥४३॥**

**मालतीं मल्लिकां मोचं[1] चिञ्चां श्वेतापराजिताम् ।**
**वास्तून्यारोपयेद्यस्तु शस्त्रेण स निहन्यते ॥४४॥**

## ॥ अथ शल्यशोधनम् ॥

वास्तुशास्त्रे—

**जलान्तं प्रस्तरान्तं वा पुरुषान्तमथापि वा ॥४५॥**

क्षेत्रं संशोध्य चोद्धृत्य शल्यं सदनमारभेत् । तत्र शल्यज्ञानोपायो वराहसंहितायाम् ।

तत्रादौ रेखाकरणम् । कृष्टां प्ररूढबीजां गोध्युषितां ब्राह्मणैः शस्तां च गत्वा महीं गृहपतिः काले सांवत्सरोद्दिष्टे भक्ष्यैर्नानाप्रकारै[2]र्दध्यक्षतसुरभिकुसुमगन्धैश्च दैवतपूजां कृत्वा, त्वतिथीनभ्यर्च्य, विप्रांश्च, विप्रः[3] स्पृष्टाथ [स्पृष्ट्वाथ] शिरोवक्षश्च, क्षत्रियो विशश्चोरू, शूद्रः पादौ स्पृष्ट्वा कुर्याद् रेखां गृहारम्भे । अङ्गुष्ठकेन कुर्यान्मध्याङ्गुल्याथवा प्रदेशिन्या कनकमणिरजतमुक्तादधिकफलकुसुमक्षतैरथवा शस्त्रेण । शस्त्र [शस्त्रेण] मृत्युर्वेधो, लौहेन भस्मिनाग्निभयं, तस्करभयं तृणेन च । काष्ठालिखितेन राजभयं, वक्रा यदा तु लिखिता शत्रुभयं, क्लेशदा विरूपा च । चर्माङ्गारास्थिकृता दन्तेन च भर्तुरशिवाय, वैरं, भयं सव्यलिखिते, प्रदक्षिणे सम्पदो विनिर्देश्याः । वाचः परुषा । निष्ठीवनं क्षुतं चाशुभं कथितम्, अर्धनिचितं कृतं वा ।

प्रविशन् स्थपतिर्गृहं निमित्तानि आलोकयेद्, गृहपतिः क्व संस्थितः स्पृशति किञ्चाङ्गम्, रविदीप्तो, यदि शकुनं तस्मिन् काले विरौति परुषरवः,

---

१. मोचाम्—ख ।
२. भक्ष्यैर्नानाकारै—ग ।
३. विष्ट्गः—क ।
४. समानम्—ग ।

स्पृष्टाङ्गसमाने[1] तस्मिन्देशेऽस्थिर्निदेश्यः । यदङ्गं स स्पृशति तदङ्गवास्तुनरस्य प्रदेशे[2] तद्देशेऽस्थिशल्यं वाच्यमित्यर्थः । शकुनसमयेऽथवान्ये हस्त्यश्वोष्ट्रादयोऽनुवाशन्ते तत्प्रभवमस्थि तस्मिंस्तदङ्गसम्भूतमेवेति । सूत्रे प्रसार्यमाणे गर्दभरावोऽस्थिशल्यमाचष्टे । श्वशृगाललङ्घितसूत्रं तच्छल्यमादेश्यम् । दिशि शान्तायां शकुनो मधुरविरावी यदा तदा वाच्यम् अर्थस्तस्मिन्स्थाने गृहेश्वराधिष्ठितेऽङ्गे वा । सूत्रे छिन्ने मृत्युः । कीले वा अवाङ्मुखे भवेद्रोगः । गृहनाथस्थपतीनां स्मृतिलोपे मृत्युरादेश्यः ।

स्कन्धच्युते शिरोरुक् कुलोपसर्गोऽपवर्जिते कुम्भे ।
भग्नेऽपि च कर्मिवधश्च्युते करात् गृहपतेर्मृत्युः ।।४६।।

सूत्रस्य च वर्णविवेकेन[3] नियमाह विश्वकर्मा—

विप्रस्य दर्भजं सूत्रं मौञ्जं तु क्षत्रियस्य च ।
कार्प्पासं च भवेद् वैश्य[वैश्यस्य]शूद्रस्य शनकल्पितम् ।।४७।।

वसिष्ठ :—

षड्वर्गशुद्धसूत्रेण सूत्रिते धरणीतले ।।४८।।

सूत्रिते समये तस्मिन् सूत्रं केनापि लङ्घितम् ।
तदस्थि तत्र जानीयात्पुरुषस्य प्रमाणतः ।।४९।।

अभ्यक्तो दृश्यते यस्यां दिशि शल्यं समादिशेत् ।
तस्यामेव तदस्थीनि सप्तत्र्यङ्गुलमानतः ।।५०।।

सूत्रिते समये यत्र श्वा सद्मोपरि संस्थितः ।
तदस्थि यदि जानीयात् षष्ठचङ्गुलमिते क्षितौ ।।५१।।

उन्मादे चागते[4] तस्मिन्समये यत्र संस्थिते ।
तदस्थि तत्र जानीयात् हस्तद्वयमितक्षितौ[5] ।।५२।।

---

१. यद्देशे—*ग* ।
२. विविकेन—*ख* ।
३. उन्मादेवागते—*ख* ।
४. *ख*-मातृकायां पाठो नास्ति ।
५. *ख*-मातृकायां पाठो नास्ति ।

चाण्डाले जटिले वापि तदा तस्यां दिशि स्थिते[1] ।
तदस्थि तत्र जानीयाद्दशीत्यङ्गुलमानतः ॥५३॥

नृगजाश्वपशूनां हित्वैकस्मिन् यत्र संस्थिते ।
तदस्थि तत्र जानीयात् षष्ठ्यङ्गुलमिति क्षितौ ॥५४॥

यस्मिन्नवसरे यत्र गृहदाहो भवेद्यदि ।
मेषास्थि तत्र जानीयात् पुरुषाष्टप्रमाणतः ॥५५॥

सूत्रे विस्तृते तस्मिन् भिन्ने कुम्भेऽथवा यदि ।
आदिशेन्निधनं तत्र दम्पत्योः क्रमशस्तदा ॥५६॥

इति निमित्तशल्यम् ।

## ॥ अथ प्रश्नवर्गशल्यम् ॥

तत्रैव—

अकारादिषु सर्वेषु दिक्ष्वष्टसु यथाक्रमात् ॥५७॥
तार्क्ष्यमार्जारसिंहाश्वसर्पास्तु गजशाशकाः[2] ।
दिग्वर्गनामियं योनिः स्ववर्गात्पञ्चमे रिपुः ॥५८॥

अवर्गोच्चारिते प्रश्ने पूर्वस्यां च समादिशेत्[3] ।
कुञ्जरास्थीनि पक्षे वा पुरुषस्य प्रमाणतः ॥५९॥

पक्षिण इत्यर्थे पक्षेरिति छान्दसम् ।

कवर्गोच्चारिते प्रश्ने वह्न्यां[4] शल्यं समादिशेत् ।
मार्ज्जारस्याथ शल्यं वा हस्तमात्रप्रमाणतः ॥६०॥

चवर्गोच्चारिते प्रश्ने याम्यायां च समादिशेत् ।
हरेर्लुल्लापशल्यं वा हस्तखातप्रमाणतः ॥६१॥

---

१. ख-मातृकायां पाठो नास्ति ।
२. शाशकाः— ग ।
३. प्राच्यां शल्यं समादिशेत्—ख ।
४. याम्यायां च समादिशेत् । त्वाग्नेयामादिशेत्—ख ।

टवर्गोच्चारिते प्रश्ने नैर्ऋत्यं च समादिशेत् ।
शुनः शल्यं नृशल्यं वा हस्तखातप्रमाणतः ॥६२॥

तवर्गोच्चारिते प्रश्ने प्रतीच्यां च समादिशेत् ।
सर्प्पस्याण्डजशल्यं वा हस्तद्वयमितक्षितौ ॥६३॥

पवर्गोच्चारिते प्रश्ने वायव्ये शल्यमादिशेत् ।
आखोर्मेषस्य वा नूनं हस्तखातप्रमाणतः ॥६४॥

यवर्गोच्चारिते प्रश्ने उदीच्यामादिशेत्ततः ।
गजस्याश्वस्य वा शल्यं पुरुषस्य प्रमाणतः ॥६५॥

[1]शवर्गोच्चारिते प्रश्ने त्वीशान्यां च समादिशेत् ।
शशकोष्ट्रशल्यं वा हस्तद्वयमितक्षितौ ॥६६॥

प्रश्नेप्युच्चारिते वेधे ब्रह्मस्थाने समादिशेत् ।
नृशल्यं गजशल्यं वा पुरुषस्य प्रमाणतः ॥६७॥

प्रश्नेप्युच्चारिते नूनं वर्गस्य यश्च पञ्चमः ।
न विद्यते तत्र शल्यं ब्रह्मोक्तत्वान्नसंशयः ॥६८॥

वास्तुशास्त्रे—

दैवज्ञं तक्षकं देवान् पूजयित्वा प्रयत्नतः ।
हलं पूर्वमुखं कृत्वा क्षेत्रशोधनमारभेत् ॥६९॥

तालाः सप्तसुराणां षण्नरपतिविप्रयोश्च पञ्चैव ।
वैश्यानां शूद्राणां चत्वारो गेहभूमिखनने स्युः ॥७०॥

एवं परीक्षन् क्षेत्रं सीरोत्कर्षं खनेत्तथा ।
तस्मिन्न्यद् दृश्यते द्रव्यं तत्फलं वच्मि यत्नतः ॥७१॥

पाषाणमिष्टकां वापि लोहं वापि विशेषतः ।
हलकाग्रेण तु दृश्यते शोभनं धनमेव वा ॥७२॥

---

१. सवर्गोच्चारिते ख ।

गोश्रृङ्गकं च दृश्येत तण्डुला दर्दुरास्तथा ।
दृश्यते स्वन्यमाने तु शोभनं तत्र निर्दिशेत् ।।७३।।

अङ्गारे[1] तु भयं मृत्युमस्थि त्वाल्पोपलक्षिते ।
पौरुषं पञ्चहस्ते[2] वा खात्वा भूमिं विशोधयेत् ।।७४।।

त्रिहस्तं चैकहस्तं वा यावद्वा शुचिमन्यते ।
तावत् खनित्वा दोषांस्तु तस्याः सर्वान् परीक्षयेत् ।।७५।।

पुनः संवत्सरं वापि षण्मासमेव च ।
तूष्णीं विधाय कर्तव्यं ज्ञात्वा दोषस्य गौरवम् ।।७६।।

गोवासैर्वर्षधाराभिर्मेदिनी धन्यतां गता ।
अन्तर्दोषान्विते देशे ह्यज्ञानाद् गृहमाचरन् ।
प्राप्नोति परमं दुःखं तथा तत्र न वर्धते ।।७७।।

एवं क्षेत्रं शल्योद्धारादिना परीक्ष्य, भूशोधनं विधाय तत्पाषाणैः पूरयेत् ।

ततो दिक्साधनपूर्वकं तत्र सूत्रप्रसारणादिना भुजचतुष्कसाम्यकर्णाप्यष्टसूत्रसमाभ्यां षड्वर्गपरिशोधनं कार्यम् । तेन साम्यं क्षेत्रफलस्य भवेत् । तथा च वसिष्ठः—

केशास्थिकीटशुद्ध्यर्थं पुरुषत्रयमानतः ।
खनित्वा पूरयेत् च पाषाणसिकताम्बुभिः ।।७८।।

एवं परीक्षितं क्षेत्रमादौ दिक्साधनम् ।
ततः चतुरस्रं ततश्चात्र कार्यं षड्वर्गशुद्धिः[3] ।
चतुरस्रेण[4] मार्गेण प्राकारं कल्पयेत् सुधीः ।।७९।।

---

१. आङ्गारे—क ।
२. पञ्चहस्तम्—ग ।
३. षड्वर्गशुद्धितः—ग ।
४. चतुरश्रेण—ग ।

शिल्पशास्त्रे—

कपिशीर्षप्रमाणैश्च पाषाणैः पूरयेद् दृढम् ।
खातं तु समं कृत्वा ततः प्राचीं प्रसाधयेत् ।।८०।।

ज्योतिषि चिन्तामणौ—

ऐन्द्र्यां शिरोभाद्रपदत्रये च याम्ये तु मार्गत्रितये ।
शिरः स्यात् पश्चाच्छिरः फाल्गुनतस्त्रये वै ।।८१।।

ज्येष्ठत्रये चोत्तरदिक्शिरोऽस्य ।
मुखा [द्] द्वितीया खलु याम्यकुक्षिः ।।८२।।

तृतीया दिक्पुच्छमतोऽस्य वामा ।
कुक्षिस्तु वास्तुप्रकृतेश्च तत्र ।।८३।।

खातं विधेयं प्रथमं गृहादौ ।
शिरः खनेन्मातृपितृश्च हानिः ।।८४।।

पादौ खनेत्स्त्रीधनगोश्च हानिः ।
खनेत्तु पृष्ठे भयरोगपीडा ।
कुक्षौ खनेत् स्त्रीधनपुत्रलाभः ।।८५।।

अत्र पूर्वोक्तपद्ये पुच्छपदेन पादौ ग्राह्यौ । प [म]तोऽसौ पुरुषवास्तुसन्निवेशस्तस्य पुच्छाभावात् । तथा च वसिष्ठोऽस्य वास्तुनरत्वमाह—

पूर्वादिदिक्शिरो वामपार्श्वशायी प्रदक्षिणाम् ।
नरवास्तुश्चरत्येष पूजनीयो गृहाधिपैः ।।८६।।

वास्तुशब्दः पुंलिङ्गेऽप्यस्ति, वेश्मभूर्वास्तुरस्त्रियामित्यमरेणोक्तत्वात्[1] । महादेवेन तु रत्नमालाटीकायामऽसौवत्सपिन्यास इत्युक्तम् । तन्मते पुच्छपदं यथाश्रुतमेव । वस्तुतो नरवास्तुः नागादयः संज्ञाभेदा एव । फले भेदाभावात् पारिभाषिका एव वेदितव्याः । तस्य च वामपार्श्वशायिनो दक्षिण-

१. अमरकोश, २।३।१९ ।

भागे उदरं तदेव खननीयं पूर्वमित्युक्तत्वं भवति। दीपिकायां पुनस्तेनैव सन्निवेशेन नागशेत इत्युक्तम्।

पूर्वादिदिक्शिरः कृत्वा नागः शेते त्रिभिस्त्रिभिः।
भाद्राद्यैर्वामपार्श्वेन तस्य क्रोडे शुभं गृहम् ॥८७॥

अस्यार्थः—यदा वामपार्श्वेन पूर्वशिरः शेते, तदा पश्चिमे पुच्छं दक्षिणे क्रोडमुत्तरे पृष्ठमित्यनेन क्रमेण प्रदक्षिणामन्यत्रापि गणयेदिति सारसागरे व्याख्यातम्।

वृषमिथुनकुलीरे खातमाग्नेयकोणे।
मृगरिपुयुवती स्यात्तौलिमीशानखातम् ॥
अलिधनुमृगराशौ खातं वायव्यकोणे।
घटझषं स्यान्द्रन्द्राः [?] खातं प्रसिद्धम्[1] ॥८८॥
[अजघटझषराशौ निर्ऋतेः खातं शस्तम्।]

पुनश्चिन्तामणौ—

ऐशानतः[2] सर्प्पति कालसर्प्पे।
विहाय सृष्टिं गणयेद्विक्षु ॥
शेषस्य वास्तोर्मुखमध्यपुच्छ-
पत्रं[3] परित्यज्य खनेच्चतुर्थम् ॥८९॥

अयं त्रिप्रकारो वास्तुरुक्तस्तन्नरवास्तुर्यस्यां दिशि तद्दिङ्मुखगृहं कार्यमित्येवमर्थः। तदाह वसिष्ठः—

एवं त्रिषु मासेषु नभस्यादिषु[4] च क्रमात्।
यद्दिङ्मुखो वास्तुनरस्तन्मुखं सदनं शुभम् ॥९०॥

अन्यदिङ्मुखगेहं तु दुःखशोकभयप्रदम्।
चतुर्द्वित्र्यादिशालानामेष दोषो न विद्यते ॥९१॥

---

१. श्लोकः ख-मातृकायामेवास्ति। ३. पत्रैः क।
२. ईशानतः—ख। ४. भाद्रभस्यादिषु—ग।

नागवास्तु दिशि खननार्थः[1] । विदिशि तु[2] स्तम्भस्थापनार्थे इति विषयविवेकः । तत्र भाद्रपदादिग्रहणं सिंहाद्यर्कसङ्क्रमणोपलक्षणं तथा च चिन्तामणौ—

**वृषार्कादित्रिकं वेद्यां सिंहादिं गणयेद् गृहे ।**
**देवालयं च मीनादिशेषाः स्युर्मकरादितः ॥६२॥**

महादेवस्तु—

**कन्यात्रये प्राच्यां धनुस्त्रये दक्षिणस्याम् ॥६३॥**

इति क्रममवर्णयदत्र शिष्टा[3]नुचाराद्देशव्यवहारो ग्राह्यः । यावच्छक्यमुभयमादित्यं[4] भाद्रसिंहादिरूपं वा ग्राह्यम् । ज्योतिः प्रकाशे—

**वास्तुचक्रं प्रवक्ष्यामि यच्च व्यासेन भाषितम् ।**
**यदृक्षे वर्तते भानुस्तदादौ त्रीणि मस्तके ॥६४॥**

**चतुष्कमग्रपादे स्यात् पुनश्चत्वारि पश्चिमे ।**
**पृष्ठे च त्रीणि ऋक्षाणि कुक्षौ चत्वारि दक्षिणे ॥६५॥**

**पुच्छे च त्रीणि ऋक्षाणि कुक्षौ चत्वारि वामतः ।**
**मुखे च[5] त्रयमेवं स्युरष्टाविंशतिः तारकाः ॥६६॥**

**शिरस्ताराग्निदाहाय[6] गृहोद्वासोऽग्रपादयोः ।**
**स्थैर्यं स्यात्पश्चिमे पादे पृष्ठे चैव धनागमः ॥६७॥**

**कुक्षौ स्याद्दक्षिणे लाभो पुच्छे च स्वामिनाशनम् ।**
**वामकुक्षौ च दारिद्र्यं मुखे पीडा निरन्तरम् ॥६८॥**

अत्रापि त्रिवेदवेदाग्नियुगाग्निवेदत्रिकेषु ३।४।४।३।४।३।४।३। भानो र्शशिभंगृहेष्ठा दाहो विनाशः स्थिरता धनं श्रीः शून्यश्च दारिद्र्यवधौ क्रमेण इति वसिष्ठवास्तुः ।

---

१. ष ननार्थः—क, षननार्थः—ग ।
२. विदिशिस्तु—ग ।
३. शिक्ष्या—ग ।
४. माद्रित्यं—क ।
५. भ—क, ख, ग ।
६. दाहो—ग ।

## ॥ अथ ग्रहवास्तुः ॥

सूर्यर्क्षतो मध्यपदक्रमेण पीठं ग्रहाणां गुणतारकाभिः ।
पापस्थले स्तम्भनिवेशनं तु विद्वान्न कुर्यादिह वास्तुकाले ॥९९॥

## ॥ अथ कलशवास्तुः ॥

ज्योतिः प्रकाशे भूर्वेदपञ्चकं त्रिस्त्रिः १।४।४।४।४।४।३।३।[1]

प्रवेशे कलशेऽर्कभाक् मृतिर्गतिर्द्धनम् ।
श्रीः स्याद्वैरं शुक् स्थिरता सुखम् ॥१००॥

विश्वकर्मा—

घटाकारं लिखेच्चक्रं रविधिष्ण्यक्रमेण च ।
मुखैकं दिक्षु चत्वारि त्रित्रीणि गुदकण्ठयोः ।
एवं चक्रं प्रवेशार्थं समालेख्यं सदा बुधैः ॥१०१॥

अत्र चत्वारि वीप्सा द्रष्ट्व्या । दिक्षु इत्यनेन गर्भोप्युपलक्ष्यन्ते । तथा च फलनिर्देशस्तत्रैव—

अग्निनाशो मुखप्रोक्तः उद्वासः पूर्वतो भवेत् ।
दक्षिणे चार्थलाभाय पश्चिमे श्रीपदो भवेत् ॥१०२॥

उत्तरे कलहश्चैव गर्भे गर्भविनाशनम् ।
स्थिरता च गुदे कण्ठे कलशस्य प्रकीर्तिता ॥१०३॥

केषाञ्चिन्मते—

त्रिवेदाब्धित्रिवेदाब्धित्रिद्विभेष्वर्कतः शशी ।
श्रीरुद्वासः स्थितिर्व्याधिर्नैःस्व्यं श्रीर्श्रीर्मृतिः सुखम् ॥१०४॥

अत्र प्रवेशे कलशवास्तुः । वृषवास्तुः भा [आ] रम्भे[2] पीठवास्तुः स्तम्भनिवेशने इत्येषः विषयविभागः ।

---

१. १।४।४।४।४।३।३—क, ग ।   २. वास्तुराभारम्भे—ग ।

*अन्यत्रापि । सूर्यस्थिताञ्छ्रीत्कलशस्य मानमि [मे] कं मुखेऽपि, क्षुन्दुं चतुष्टयानि, गर्भे चतुष्कं, त्रितयं तु कण्ठे, गुदे त्रिकं स्थापन [?नी] य [म्]; क्रमेतत्—

मुखे तु स्वामिनो मृत्युः ।
पूर्वेनो [णो] द्वासनं भवेत् ।।
दक्षिणे वार्थलाभाय ।
पश्चात् सन्ततिवृद्धये ।।१०५।।

उत्तरेह निरोगै [ग] श्च ।
गर्भे गर्भविनाशनम् ।।
कण्ठे श्रियमवाप्नोति ।
गुदे धनविनाशनम् ।।
प्रवेशे नगरादीनां—
विक्रमेतद्विलोकयेत् ।।१०६।।

इति कुम्भचक्रम् ।

अन्यच्च—

सिंहादिवृश्चिकादिश्च कुम्भादिवृषभात्त्रयम् ।
ईशकोणे च वायव्ये नैर्ऋत्येऽग्नौ मुखं क्रमात् ।।१०७।।

वायव्ये निर्ऋतावग्नौ ईशकोणोदरं क्रमात् ।
निर्ऋतावाग्निकोणेन ईशे वातेवपुच्छकम् ।।१०८।।

आस्येव स्वामिनं हन्ति द्रव्यं तु चोदरे ।
पुच्छे क्लेशत्रयं त्याज्यं शेषकोणे शुभप्रदम् ।।१०९।।

अन्यद्वा—

पूर्वे पूर्वशिरो भाद्रे मार्गे दक्षिणमस्तकः ।
फाल्गुने वानुणे [?वामगे] शेते ज्येष्ठे चोत्तरमूर्द्धनि ।।११०।।

ऊर्ध्वभागद्वयत्यन्त्काः भागद्वयेनाधः स्थितम् ।
मध्ये नाभि विजानीयादित्याह धरणीधरः ॥१११॥

शिरो हन्ति व्रणं [?व्रभुं] मृत्युः पृष्ठतो भ्रातृपुत्रयोः ।
जङ्घे कुलक्षयं विद्यादुदरे सर्वसम्पदः ॥११२॥

अष्टदाममन्त्रः—

हिरण्यगर्भे वसुधे शेषस्योपरिशायिनी ।
स्थानं देहि गृहं कर्तुं गृहाणार्घं नमोऽस्मत्तो-
हिमकुन्दमृणालाभानन्तानन्तफलप्रदा ।
स्थानं देहि गृहं कर्तुं गृहाणार्घं नमोऽस्तुते ॥११३॥*

## ॥ अथ शिलान्यासः ॥

वराहसंहितायाम्[1]—

दक्षिणपूर्वे[2] कोणे कृत्वा पूजां शिलां न्यसेत् प्रथमम् ।
शेषा. प्रदक्षिणेन्य [? न] स्तम्भाश्चैवं समु[प]स्थाप्याः[3] ॥११४॥

छत्रस्रगम्बरयुतः कृतधूपविलेपनं समुत्थाप्यः ।
स्तम्भस्तथैव कार्यो द्वाहो [रो] च्छ्रायः प्रयत्नेन ॥११५॥

विहगादिभिरवलीनैराकम्पितपतितदुःस्थितैश्च फलम् ।
शक्रध्वजफलसदृशं तस्मिंश्च शुभाशुभं विनिर्दिष्टम् ॥११६॥

प्रागुत्तर [ -नो] न्नते धनसुतक्षयः सुतवधस्तु दुर्गन्धे ।
वक्रे बन्धुविनाशो नश्यन्ति गर्भाश्च दिङ्मूढे ॥११७॥

इच्छेद्यदि गृहवृद्धिं ततः समन्ताद्विवर्धयेत्तुल्यम् ।
एकोद्देशे दोषः प्रागथवाप्युत्तरे कुर्यात् ॥११८॥

---

* ताराङ्कितो भागः ख-मातृकायामेव प्राप्यते ।

१. बृहत्संहिता, ५३।११२-११९ ।

२. बृहत्संहितायां 'उत्तरपूर्वे' इति पाठः प्राप्यते ।

प्राग्भवति मित्रवैरे [?रं] मृत्युभयं दक्षिणेन यदि वृद्धिः ।
अर्थविनाशः पश्चादुदग्विवृद्धे [द्धि] मंनस्तापः ॥११९॥

अथ स्तम्भसाधनाय कानि काष्ठानि ? आह वराह[1] एव—

खगनिलयभग्नसंशुष्कदग्धदेवालयश्मशानस्य ।
क्षीरतरुद्रवबिभीतकनिम्बाऽरणिवर्जितान् छिन्द्यात् ॥१२०॥
रात्रौ कृतबलिपूजान् [पूजं] प्रदक्षिणं क्षे [छे] दयेद्दिव्यवृक्षान् ।
धन्या [न्य] मुदक्प्राक्पतनं न ग्राह्योऽतोऽन्यथा पतितः ॥१२१॥
छेदो यद्यविकारी ततः शुभं दारु तद्गृहं पथिकः[2] ॥१२२॥

यानीह भूतानि वसन्ति तानि बलिं गृहीत्वा विधिवत्प्रयुक्तमन्यत्र वासं परिकल्पयन्तु क्षमन्तु तान्यत्र नमोऽस्तु तेभ्यः—इति वृक्षछेदनमन्त्रः ।

अन्यवेश्मस्थितं दारुं नैवान्यस्मिन्नियोजयेत् ।
न जातुवसतेः कर्ता वसन्नपि न जीवति ॥१२३॥

इष्ट[का] काष्ठपाषाणमृत्तिकाचूर्णमायसम्[3] ।
तृणं पत्रं बुधैः प्रोक्तं दारुसङ्ग्रहणाय वै ॥१२४॥

नूतनैः नूतनं काष्ठं जीर्णे जीर्णं प्रशस्यते ।
जीर्णे च नूतनं श्रेष्ठं नो जीर्णं नूतने शुभम् ॥१२५॥

## ॥ अथायव्ययादिविचारः ॥

विश्वकर्मा—

विस्तारेणाहतं दैर्घ्यं विभजेदष्टभिस्ततः ।
यच्छेषं समं वेदा यो ध्वजाद्यास्ते स्युरष्टधा ॥१२६॥
ध्वजो धूम्रो हरिः श्वा गौ खरो[रे]भौ वायसोऽष्टमः ।
पूर्वादिदिक्षु चाष्टानो[नां]ध्वजादीनामवस्थितिः ॥१२७॥

---

१. बृहत्संहिता, ५३।१२०-१२२ ।
२. बृहत्संहिता, ५३।१२२ । तद् गृहोपयिकम्—पाठोऽयं प्रकाशिते ग्रन्थे बृहत्संहितायां प्राप्यते ।
३. लोहम्—ग ।

स्वसंस्थाने ध्वजः श्रेष्ठो गजः सिंहस्तथा वृषः ।
ध्वजः सर्वगतो देयो वृषं नान्यत्र दापयेत् ।।१२८।।

वृषं सिंहं गजं चैव खेटे कर्क [र्व] टकोटयोः ।
द्विपः पुनः प्रयोक्तव्यो वापीकूपसरेषु च ।।१२९।।

मृगेन्द्रमासने दद्याच्छयने दद्याद् गजः पुनः ।
वृषं भोजनपात्रेषु छत्रादिषु पुनः ध्वजम् ।।१३०।।

अग्निवेश्मसु सर्वेषु गृहे वह्न्युपजीविनाम् ।
धूमं नियोजयेत् केचित् श्वानं [च] म्लेच्छादिजातिषु ।।१३१।।

खरो वेश्यागृहे[1] शस्तो ध्वाङ्क्षः शेषकुटीषु च ।
वृषसिंहो[2] गजश्चापि प्रासादपुरवेश्मसु ।।१३२।।

वसिष्ठः—

गजाः ये वा ध्वजाः ये वा गजानां सदनं शुभम् ।
अश्वालयं ध्वजाः ये च खराः ये वृषभेऽपि वा ।।१३३।।

उष्ट्राणां मन्दिरं कार्यं गजाः ये वा वृषे ध्वजे ।
पशुसद्म वृषाः ये च ध्वजाः ये वा शुभप्रदम् ।।१३४।।

शय्यासु वृषभः शस्तः पीठे सिंहः शुभप्रदः ।
अन्यत्र छत्रवस्त्राणां वृषाः ये वा ध्वजेऽपि वा ।।१३५।।

पादुकोपानहौ कार्यौ सिंहाख्येऽप्यथवा ध्वजे ।
उन्नतानामप्यनुन्नतानां मन्दिराणां ध्वजः शुभः ।।१३६।।

च्यवनः—

महानसेऽग्नि लापाक[?लावक] गृहे चाग्न्युपजीविनाम् ।
धूमं दद्या[त्] तथा श्वानं यवनान्त्यजयोर्गृहे ।।१३७।।

खरो वेश्यागृहे[3] देयो ध्वजः क्षत्रियविट्गृहे ।
वृषं सिंहं गजं दद्यात् प्रासादपुरमन्दिरे[4] ।।१३८।।

---

१. वश्यागृहे—ख, वैश्यगृहे—ग । २. ख, वृषगजश्चापि—क, ग ।
३. वैश्यगृहे—ख । ४. ख-मातृकायां 'मन्दिरे' नास्ति ।

सर्वे स्वाभिमुखाः[1] ।

ध्वजे परास्यं विप्राणां राज्ञां सिंहेप्युदङ्मुखम् ।
गजे शूद्रस्य याम्यास्यं वृषे पूर्वा [?र्वं] मुखं विशः ।।१३९।।

वस्त्रेषु धर्मशालायां कुम्भे स्तम्भे ध्वजे ध्वजः ।
गोगजौ भूगृहे देयौ साधारणतृणौकसि ।।१४०।।

यन्त्रे शस्त्रे रथे सिंहो भाण्डागारे शुभो गजः ।
धान्याम्बुस्थानगोऽश्वेभशालायां वृषभः शुभः ।।१४१।।

नाद्यगेहोद्वाहवेद्यां गज[2]सिंहवृषाः शुभाः ।
कीर्तिः शोको जयो वैरं धनं निर्धनता सुखम् ।।१४२।।

रोगश्चेति गृहारम्भे ध्वजादीनां फलं क्रमात् ।
यत्र दैर्घ्यं गृहादीनां द्वात्रिंशद्धस्ततोऽधिकम् ।।१४३।।

आयव्ययौ भूमिशुद्धि तृणगेहे न चिन्तयेत् ।
शिलान्यासादिनो कुर्यात्तथागारे पुरातने ।।१४४।।

## ।। अथ गृहनक्षत्रादिज्ञानम् ।।

वास्तुशास्त्रे—

आयामे विस्तृतिहते योऽङ्कः सञ्जायते किल ।
स मूलराशिः विज्ञेयो गृहस्य गणकैः सदा ।।१४५।।

अष्टभिर्गुणिते तस्मिन् मूलराशौ विशारदैः ।
सप्तविंशतिभक्ते यच्छेषं तद् गृहभं भवेत् ।।१४६।।

तत्र चाङ्केऽष्टभिर्भक्ते योऽङ्कः स स्याद् गृहे व्ययः ।
पैशाचो रक्षसो यक्षः स त्रिधा स्मर्यते व्ययः ।।१४७।।

पैशाचास्तु समायः स्याद्राक्षसोप्यधिके व्यये ।
आयान्न्यूनतरो यक्षो व्ययस्यैषा विचारणा ।।१४८।।

---

१. मध्यगेहे पराङ्मुखाः—ख ।    २. गन—क ।

मूलराशौ व्यये क्षिप्ते गृहनामाक्षरेषु च ।
ततो हरे [त्] त्रिभिर्भागं यच्छेषं सोऽशंको भवेत् ।।१४९।।
इन्द्रो यमश्च राजा स्यादंशकाश्च त्रयस्त्विमे ।
गृहभं स्वामिभाद् गण्यं भक्ते च नवभिः पुनः ।।१५०।।
यच्छेषं सा भावे [?यथे] तारा सप्तपञ्चत्रिकाधमाः ।
राक्षसामरमर्त्योक्तं गणयोन्यादिकं पुनः ।।१५१।।
ज्ञेयं ज्योतिषशास्त्रे तद्विदमित्यत्र नोदितम् ।
यत्र गृहस्य नक्षत्रं राशिद्वयानुगामि तत्र ।।१५२।।

निर्णयो वास्तुशास्त्रे—

अश्विन्यादित्रयं मेषे सिंहे प्रोक्तं मघात्रयम् ।
चापे भत्रितयं ज्ञेयं शेषेषु नवराशयः ।।१५३।।

## ।। अथ तिथिज्ञानम् ।।

शक्राहतं क्षेत्रफलं त्रिंशद्भक्तावशेषकम् ।
प्रतिपदादितिथिर्ज्ञेया दर्शरिक्तां विवर्जयेत् ।।१५४।।
चतुर्भिः गुणितं क्षेत्रफलं षोडशभिः द्विर्भजेत् ।
शेषं ध्रुवादिकं ज्ञेयं सद्मनाम यथाक्रमम् ।।१५५ ।।

*इति केचित् । अपरेत्तु—

व्यासव्यायामहस्तैक्यं त्रिद्विमैक्यार्द्धसंयुतम् ।
नृपभक्ते भवेच्छेषं गृहनाम ध्रुवादिकम्* ।।१५६।।

वस्तुतस्तु अलिन्दवशादेव ध्रुवादिज्ञानम् । तदेषां प्रस्तारावसरे व्यक्तं निरूपयिष्यामः । व्यवहारोच्चये —

गृहभूमिसमाहतपिण्डपदम् ।
वसुलोचनरन्ध्रगजैर्गुणितम्[1] ।।
रविभूधरभूधरयोगहृतम्[2] ।
द्रविणव्ययबन्धभसङ्कलनम् ।।१५७।।

---

* अंशोऽयं ख-मातृकायां न प्राप्यते ।

१. ८।२।९।८—क, ख ।   २. १२।८।८।२७—क ।

त्रिभिस्त्रिभिर्वेश्मनि कृत्तिकाद्यैरुच्छेदपुत्राप्तिधा[ध]नानि शोकः, शत्रोर्भयं राजभयश्च, मृत्युः, सुखं प्रवासश्च नवप्रभेदाः ।

न दोषाय भवेद्वेश्म स्वल्पदोषं गुणाधिकम् ।
आयव्ययविहान्वेष्यौ विरुद्धर्क्षं च वर्जयेत्[1] ।।१५८।।

अत्रायं निर्णयः । विस्तारायामघाते हि क्षेत्रं भवति । तदायते समे वा चतुरस्रे समश्रुतौ भवति । विषमश्रुतौ तु अतुल्यकर्णाभिहतिर्द्विभक्ताफलं भवति[2] । यत्र हस्तैर्न सम्भवति तत्राङ्गुलात्मकं फलं वेदितव्यम् । तथा च वास्तुशास्त्रे—

यत्र दण्डैर्मितं क्षेत्रं तत्रायो हस्तसम्मितः ।
क्षेत्रलाभे तु तत्रैव ग्राह्यः स स्यादिहाङ्गुलैः ।।१५९।।

गृहेषु कर्महस्तेन मानं स्वामिकरेण वा ।
देवतानां तु धिष्ण्येषु कर्महस्तेन केवलम् ।।१६०।।

अथ यत्र हस्तादिगणनया क्षेत्रफले क्रियमाणे व्ययांशकादिशुद्धिर्नोपलभ्यते, तत्राप्यङ्गुलादिकं निक्षिप्य संशोध्य वा क्षेत्रफलं शोध्यम् । यदाह भीमपराक्रमः—परमानन्दगुणं चेत्तदाङ्गुलादिप्रदाय हित्वा वा क्षेत्रफलं गणितेन प्रसायेद्दिष्टसिद्ध्यर्थमगुणमायव्ययादिशून्यं तत्र यादृशं क्षेत्रफलमिष्टं, तस्य परिदृश्यमानस्य च यदन्तरं तेनेष्टौ विस्तारायामौ संगुण्येऽष्टेन कथितक्षेत्रफलमपरो राशिः इत्याद्यूहनीयम् । सारसमुच्चये—

रूपाष्टभि[3]र्विनिहितो भवनस्य बन्धो ।
नक्षत्रमिष्टमिह युग्मशरदेन्दुनिघ्नम्[4] ।।

---

१. विवर्जयेत्—ग । २. भवन्ति—क ।
३. ८—क, ८१—ख, १८१—ग । ४. १५२—क ।

एकीकृतं रसनिशाकरयुग्मशेष—
मिष्टस्ततो भवति[1] मध्यगृहस्य पिण्डः ॥१६१॥

अन्यत्रापि—

गोऽङ्कर्त्वष्टगुणाष्टनागजलधिव्यालैर्हतं[2] भूफलम् ।
नागाद्यङ्कदिवाकराष्टभतिथियोगैः खसूर्यैः[3] भजेत् ॥१६२॥
आयं वारमथांशकं धनमृणं तारां तिथिं चिन्तये-
द्योगं चायु[4]रितीह शेषकपदे भागे हृते तान्त्रिकैः ॥१६३॥

वसिष्ठनारदौ—

विस्तारायामगुणितं गृहस्य पदमुच्यते ।
तस्माद्धनाधनायर्क्षवासराख्या नवांशकाः ॥१६४॥
गृहस्यागतभयं तु यद्विराश्यात्मकं यदि ।
तन्नवांशवशात्तत्र ज्ञातव्यं सर्वदा गृहे ॥१६५॥
गजरामाङ्कवस्वङ्कर्तुभि[5]र्गुणितात्पदात् ।
सूर्याष्टाष्टर्क्षशैलाङ्क[6]विभक्तादवशेष[?षां]शकाः[7] ॥१६६॥
*सम्पूर्णा शुभदास्त्वेते ह्य सम्पूर्णस्त्वनिष्टदा ।
धनाधिकं गृहं वृद्ध्यै निर्धनाय ऋणाधिकम् ॥१६७॥
विषमायः शुभा चैव समायः* शोकदुःखदः ।
गृहस्य तत्पतेस्त्वेकं धिष्ण्यं चेन्निधनप्रदम् ॥१६८॥
विपत्प्रदा विपत्तारा प्रत्यरी [?रिः] प्रतिकूलदा ।
[8]निधनाख्या त्तारका तु सर्वथा निधनप्रदा ॥१६९॥

---

१. मिष्टत्स्तातो भवति क ।  २. ९।९।६।८।३।८।८।४।८—क, ख, ग ।
३. ८।७।९।१२।८।२७।१५।२७।१२—क, ख, ग हस्तलेखयोः १२ स्थाने १२० वर्तते ।  ४. वायु —ग ।
५. ८।३।९।८।९।६—क, ख, ८।२।९।८।९।६—ग ।
६. १२।८।८।२७।७।९—क, ख, ग ।  ७. विभक्तादवधनादय; शिकाः—ख ।
* अंशोऽयं ख-मातृकायां नास्ति ।  ८. निधनाख्याता न का टु सर्वथा—ख ।

विवर्ज्य[1] तारकास्वेतं[2] निर्माण[3]मशुभप्रदम् ।
कुर्वन्नज्ञानतो मोहाद्दुः [?द्दु:] खभाग् व्याधिभाग् भवेत् ।।१७०।।

राशिकूटादिकं सर्वं दम्पत्योरिव चिन्तयेत् ।
नैस्वं[4] द्विद्वादशे नूनं त्रिकोणे त्वनपत्यता ।।१७१।।

षष्टाष्टके[5] नैधनं स्याद् व्यत्यये मध्यमं स्मृतम् ।
परेषु शुभदं गेहं सर्वं[6] तत्कर्तु[7] राशित ।।१७२।।

सूर्यारवारराश्यंशां: सदा वह्निप्रदाः ।
[वाराः सूर्यारशन्यंशा सदा वह्निभयप्रदा[8]]
शेषग्रहाणां वारांशाः कर्तुरिष्टार्थसिद्धिदाः ।।१७३।।

तस्मात् सर्वं परीक्ष्याथ वदे [ज्-] ज्योतिषिकः सदा ।
यत्र गृहगृहेशयोर्नाडीवेधस्तदा पुनः ।।१७४।।

प्रशस्तमेव राशि कूटमिति महादेवेन व्याख्यातं रत्नमालाटीकायाम् ।
तथा चोक्तं चिन्तामणौ—

सेव्यसेवकयोश्चैव गृहतत्त्व [?त्] स्वामिनोरपि ।
परस्परं मित्रयोश्चेदेकनाडी प्रशस्यते ।।१७५।।

स्मृतावपि—

एकनक्षत्रजातानां परेषां प्रीतिरुत्तमाम् ।
दम्पत्योः कलत्रजातो रिपुर्भवेत् ।।१७६।।

अथोत्तमोत्तममध्यमाधमाधमभेदेन पञ्चविधानि गृहाणि राजादीनां नियतपरिमाणान्युच्यन्ते । तथा च काश्यपः—

अष्टोत्तरं[9] हस्तशतं विस्ताराम्नृपमन्दिरम् ।
कार्यं प्रधानमन्यानि तथाष्टाष्टोनितानि तु ।।१७७।।

---

१. विवर्ज—*ख, ग* ।
२. तारकास्ते—*ख* ।
३. तन्निर्माणम्—*ख* ।
४. नैख्यम्—*ग* ।
५. षष्टाटमे—*ग* ।
६. सर्वे—क, *ग* ।
७. तत्कार्ज्जु—*क, ग* ।
८. वास्तु प्रबोध, ६८ ।
९. १०८—*ग* ।

विस्तारं पादसंयुक्तं दैर्घ्यं तेषां प्रकल्पयेत् ।
एवं पञ्च नृपः कुर्याद् गृहाणि च पृथक्-पृथक् ॥१७८॥

अयमर्थः—अष्टोत्तरं हस्तशतमुत्तमोत्तमगृहे विस्ताराच्च चतुर्थांश-समेतं ये च त्रिशदधिकं शतहस्तमितं दैर्घ्यं तस्मिन् विधेय [म्]। क्रमेण अष्टाष्टोनतया[1] परेषां विस्तारो दैर्घ्यं तु[2] दशोन[3]तयार्थादिव सिद्ध्यति सपाद[4]त्वस्याभिधानात् । तथा च हस्तशतविस्तारं पञ्चविंशतिहस्ताधिकं शत-दीर्घद्वितीयगृहमेवमितराणि कल्पयेत् । अत्र सर्वत्रायव्ययादिगणना नोचिता मुनिवचने निर्णयानौचित्यात् । बृहत्संहितायामपि[5]—

उत्तममष्टाभ्यधिकं हस्तशतं गृहं पृथुत्वेन ।
अष्टाष्टोनान्येवं पञ्च सपादानि[6] दैर्घ्येण ॥१७९॥

षड्भिः षड्भिर्हीना सेनापतिसद्मनां चतुः षष्टिः ।
पञ्चैवं विस्तारात् षड्भागसमन्वितं दैर्घ्यम् ॥१८०॥

षष्टिश्चतुश्चतुर्भिर्हीना वेश्मानि पञ्च सचिवस्य ।
[अ]ष्टांशयुतं दैर्घ्यं तद्धतो राजमहिषीणाम् ॥१८१॥

[षड्भिः] षड्भिश्चैव युवराजस्यापि [?प] र्वजिताऽशीतिः ।
त्र्यंशान्विता[7] च दैर्घ्यं पञ्च तदर्धैस्तदनुजानाम् ॥१८२॥

अनुजाः कनिष्ठभ्रातरः ।

नृपसचिवान्तरतुल्यं सामन्तप्रवर[8]राजपुरुषाणाम् ।
नृपयुवराजविशेषः कञ्चुकिवेश्याकलाज्ञानाम्[9] ॥१८३॥

सामन्ताः माण्डलिकाः । पञ्चानामपि गृहाणां प्रत्येकं विस्तारायामयोर्नृपसचिवसम्बन्धिनोः परस्परं पदान्तरं तत्संख्यया विस्तारायामौ सामन्तादीनामेव परत्रापि योज्यम् ।

---

१. अष्टोष्टोनतया—ग ।
२. क, ग ।
३. दर्शन क, ग ।
४. सवाद—ख ।
५. बृहत्संहिता, ५३।४-७ ।
६. वसयं पदानि—क, ग ।
७ त्रिशान्विता क, ग ।
८. सामनत्रवर—क, ग ।
९. बृहत्संहिता, ५३।८ ।

**अध्यक्षाधिकृतानां सर्वेषां कोशय [?र] तितुल्यम् ।**
**युवराजमन्त्रिविवरं कर्मान्ताध्यक्षदूतानाम्[1] ।।१८४।।**

अध्यक्षाः गजाश्वादिशालाध्यक्षाः, कर्मान्ताध्यक्षाः कर्मशालानियुक्ताः ।

**चत्वारिंशद्धीना चतुश्चतुर्भिस्तु पञ्च यावदिति ।**

शालाध्यक्षाः ।

**षड्भागयुता दैर्घ्यं दैवज्ञभिषवपुरोहितानाञ्च ।।१८५।।**
**वास्तोर्यो विस्तारः स एवोच्छ्रायनिश्चयः शुभदः ।**
**शालैकेषु गृहेष्वपि [वि] स्ताराद्विगुणितं दैर्घ्यम्[2] ।।१८६।।**

कश्यपोप्याह । चतुःशालगृहभेदं निरुप्य सामान्येनाह वराहः[3]—

**चातुर्वर्ण्यव्यासो द्वात्रिंशत् चतुश्चतुर्हीना ।**
**आषोडशादिति परं न्यूनतरमतीव हीनानाम् ।।१८७।।**

**सदशांशं विप्राणां क्षत्रस्याष्टांशसंयुतं दैर्घ्यम् ।**
**षड्भागयुतं वैश्यस्य भवति शूद्रस्य पादयुतम् ।।१८८।।**

अत्र ब्राह्मणस्य पञ्चगृहाः द्वात्रिंशदारभ्य षोडशान्ताः क्षत्रियस्याष्टाविंशतिमारभ्याषोडशान्तं, चत्वारि[4] वैश्यस्य चतुर्विंशतिमारभ्याषोडशं, त्रीणि शूद्रस्य तु विंशतिः षोडशान्तकम्, एकं विप्रस्य दशांशसहितो विस्तारो दैर्घ्यम् । क्षत्रियस्याष्टांशं, विष[?श]यस्य षड्भागयुतं, शूद्रस्य सपादमित्युत्पलेन व्याख्यातम् । तत्सम्प्रदायानुरोधेन ननु पदमहिम्ना ब्राह्मशम्भुः—

**द्वात्रिंशद्धस्तविस्तीर्णं भवेद् ब्राह्मणमन्दिरम् ।**
**प्रत्येकं क्षत्रियादीनां चतुर्हस्तविहीनकम् ।।१८९।।**

**वस्वद्रिरस[?सा]वा[?]णांशैरायतं[5] चोभयोरपि ।**
**वर्द्धितविषमैरंशैरायत्रयविशुद्धये[6] ।।१९०।।**

---

१. बृहत्संहिता, ५३।९ । २. बृहत्संहिता, ५३।१०-११ ।
३. बृहत्संहिता, ५३।१२-१३ । ४. चात्वारि—क, ग ।
५. नायतम ख । ६. निशुद्धये—ख

अयमर्थः यदुक्तमन्दिरमानेषु आयव्ययशुद्धिर्नोपलभ्यते । तदा तत्र कश्चिद्विषमोंऽशो दैर्घ्ये[1] विस्तारे च । तथा वर्द्धनीयो[2] यथा[3] आयव्ययादिशुद्धिरुपपद्यते वराहः[4]—

**नृपसेनापतिगृहयोरन्तमानेन कोशरतिभवने[5]।**
**सेनापतिचातुर्वर्ण्यविवरतो राजपुरुषाणाम् ॥१९१॥**

अत्र राजपुरुषाः द्विविधाः, श्रेष्ठाः साधारणाश्च । तत्र प्रागेवोक्तं नृपसचिवान्तरतुल्यमिति । अन्येषामिदं, तत्राप्येष विशेषः । सेनापतेः पञ्चहस्तास्तेषां पञ्चभिरपि ब्राह्मणगृहैः सहान्तरं विधाय ब्राह्मणराजपुरुषस्य गृहपञ्चकनिर्माणं, क्षत्रियादिवर्णराजपुरुषाणां पुनरेकह्रासः पूर्वादी[6]रतिक्रमानुरोधात् । तथा च सेनापतेर्द्वितीयादिचर्तुर्णां चतुर्भिरन्तरं वैश्यस्य तृतीयादित्रिकं वै गृहत्रयान्तरं चतुर्था[दि]द्विकस्य शूद्रस्य सम्बन्धि[7] गृहद्वयमिति व्याख्यातमुत्पलेन ।

**अथ पारसवादीनां स्वमानसंयोगादलसमं भवनम्[8] ।**
**हीनाधिकं समानादशुभकरं वास्तु सर्वेषाम्[9] ॥१९२॥**

अस्यार्थः—ब्राह्मणेन शूद्रायां जातः पारस[व], एवमादिका अन्येऽपि वर्णसङ्कराः अनुलोमप्रतिलोमादयस्तेषां मातृकुलपितृकुलमानयोर्योगदलमानेन समानानि गृहाणि शुभानि । पारसवादिविवेचनमाचारसौख्येव गन्तव्यम् ।

**पश्वाश्रमिणामभितं धान्यायुधवह्निरतिगृहाणां च ।**
**नेच्छन्ति शास्त्रकारा हस्तशतादुच्छ्रितिं परतः[10] ॥१९३॥**

---

१ दैर्घे—क, दैर्घ्यम्—ख ।
२. ख ।
३. ख ।
४. बृहत्संहिता, ५३।१४ ।
५. भवनेन—क, ग ।
६. पूर्वोदी—ख ।
७. एवं वंधि ख ।
८. भवं नां—ख ।
९. बृहत्संहिता, ५३।१५ ।
१०. बृहत्संहिता, ५३।१६ ।

गर्गः—

**शतहस्तोच्छ्रितं कार्यं चतुःशालं गृहं बुधैः ।**
**अमितं त्वेकशाले [लं] तु शुभदं तत्प्रकीर्तितम् ॥१६४॥**

अत्र पूर्वं कश्यपवचनमूलकतया विस्तारतुल्यमुन्नतत्वं प्रागुक्तं तथा चाष्टोत्तरं शतं परमोच्चत्वं प्राप्तम् । अधुना गर्गवचनमूलकतया शतहस्ताद‌धिकत्वं निषिद्धमिति पूर्वापरविरोधे परिहृतमुत्पलेन । द्वित्रिचतुःशालगृहेषु उच्छ्रायनियमः । एकशालगृहेषु अनियमात् तत्रैव व्यासतुल्यमुच्चत्वमिति ।

**एकशालं यथाकामं विस्तारं कामयेद् गृहम् ॥१६५॥**

इति शक्रवचनात् । तत्र यतः एकशालेषु वराहेण[१] स्वयमेव—

**शालैकेषु गृहेष्वपि विस्ताराद् द्विगुणितं दैर्घ्यम् ॥१६६॥**

इत्युक्तम् । अत्र पुनः सपाददैर्घ्यमिति नायं पंथा साधीयान् । किञ्च, एकशालं विप्रादीनां न क्रियते इति स्वयमेव व्याख्यातम् । तथा च बृद्धगर्गः —

**अनाजीवकरं सर्वमेकशालमुदाहृतम् ।**
**अपि शाला तृणमयी कार्या तस्य शुभप्रदाः ॥१६७॥**

अपरे तु—न्यूनपरिमाण[गण]नयाष्टोत्तरं हस्तशतमधिकपरिमाणहस्तगणनया शतमितिवचनयोरभिप्रायं वर्णयन्ति । तदपि न नियमेन गणनाभिधानात् । तथा च राजमार्तण्डः—

**स्वामिहस्तप्रमाणेन ज्येष्ठपत्नीकरेण वा ।**
**मनुपादहस्तसंख्यानमिति प्रोक्तं पुरातनैः ॥१६८॥**

वास्तुशास्त्रेऽपि—

**गृहेषु हस्तमानं स्यात्स्वामिहस्तप्रमाणतः ।**
**देवादीनां तु धिष्ण्येषु कर्महस्तेन केवलम् ॥१६९॥**

---

१. बृहत्संहिता, ५३।११ ।

अन्ये तु—विस्तारतुल्योच्चताविधानमुत्सर्गस्सव (?) शतहस्ताधिक्य निषेधवचनेन बाध्यत इत्याहुः। वस्तुतस्तु गर्गवाक्ये शताधिकस्य निषेधो नास्ति। तेन शतपदमष्टोत्तरं शतमुपलक्षयति। कश्यपवचनस्वरसात् राज्ञो द्वितीयं गृहमादाय[1] च शतपदमुपात्तं वराहं वाक्येऽप्येवमेव योजनेति युक्तं प्रतीमः।

## ॥ अथ शालालिन्दयोः प्रमाणम् ॥

वराहः[2]—

सेनापतिनृपतीनां सप्तति[3]सहिते द्विधाकृते व्यासे।
शाला चतुर्दश[4]हृते पञ्चदशो धृतेऽलिन्दः ॥२००॥

सेनापतिनृपतिग्रहणमुपलक्षणमितरस्यापि यस्य कस्यापि व्यासं सप्तत्या संयोज्य द्विधा कृत्वा एकत्र चतुर्दशभिर्भागो परत्रयं च दश एव कृते क्रमाच्छालालिन्दमाने भवतः। क्वचित्पञ्चत्रिंशोद्धृत इति पठ्यते[5]। शाला-शब्देन गृहाभ्यां[?भ्यन्तर]मुच्यते। अलिन्दशब्देन शालाभित्तेर्बाह्ये या गम-निका दृगाङ्गणं सम्मुखीक्रियते सा ज्ञेयेत्युत्पलः। प्रतिशालाख्यमिति महादेवः। प्रघाणप्रघणालिन्दा वहिर्द्वारप्रकोष्ठक इत्यमरः[6]। पूर्वमुत्तमेभ्यष्टाभ्यधिकमिति क्षेत्रस्य परिमाणमुक्तम्। तत्रायं निर्माणविधिः। अथास्यापवादः—

हस्तद्वात्रिंशादिषु चतुश्चतुस्त्रित्रिकत्रिकाः शालाः[7]।
सप्तदशतृ [त्रि] तयतिथित्रयोदशकृताङ्गुलाभ्याधिकाः ॥२०१॥

त्रित्रिद्विद्विसमाः क्षयक्रमादङ्गुला [नि] चैतेषाम्।
व्येका विंशतिरष्टौ विंशतिरष्टादश तृ [त्रि] तयम्[8] ॥२०२॥

---

१. गृह्ण—क, ग। २. बृहत्संहिता, ५३।१७।
३. सा मति—क। ४. चतुर्दशर्दशहृते—ग।
५. पम्रते—ख। ६. अमरकोश, २।२।१२।
७. ४।४।३।३।३। —ख। ८. बृहत्संहिता, ५३।१८-१९।

अस्य व्याख्या—द्वात्रिंशेत्यादिना चातुवर्ण्यमुलक्ष्यते । तेषां शाला-परिमाणमिदं यथा चतुरादयो हस्ताः ४।४।३।३।३। सप्तदशाद्यङ्गुलै—१७।३।१५।१३।४।[1] रधिकाः पञ्चानामपि गृहाणां शालापरिमाणम् । क्षत्रिच [स्य] द्वितीयादिचत्वारि एवं वैश्यशूद्रयोरेकैकं ह्रासे द्वे च त्रीणि वेदितव्ये । तथा च त्र्यादि ३।३।२।२।१९।८।२०।१८।३। समेतास्तेषां तेनैवक्रमेणालिन्द-प्रमाणमनुक्तमपि प्रकरणमहिम्ना लभ्यते ।

क्षयक्रमाद् गृहक्रमेण निवासक्षययोः क्षय इत्यभिधानात् क्षितिवास[2] इति धात्वर्थानुगमाच्च ।

शालात्रिभागतुल्या कर्तव्या वीथिका बहिर्भवनात् ।
यद्यग्रतो भवति सा सोष्णीषं नाम तद्वास्तु ।।२०३।।
सायाश्रयमिति पश्चात् सावष्टम्भं तु पार्श्वसंयुतया ।
सुस्थितमिति च समन्ताच्छास्त्रज्ञैः पूजिताः सर्वाः[3] ।।२०४।।

शालाप्रमाणमुक्तम् । तस्य तृतीयो भागो वीथी । सा भवनाद् बहिः भागे कार्या ।

विस्तारषोडशांशः सचतुर्हस्तो भवेद् गृहोच्छ्रायः ।
द्वादशभागेनोनू [नो] भूमौ भूमौ समस्तानाम्[4] । २०५।।

तद्यथा अष्टोत्तरं शतं राजगृहस्य विस्तारस्य षोडशांशः षट्हस्ताः अङ्गुलान्यष्टादश एव[5] । चतुर्हस्ताधिकाः पादोना एकादशः एतदधस्तन-भूमिकामानम् । इदं स्वद्वादशांशोनं द्वितीयभूमिकामानम् । एवमुपर्य्युपरि भूमयो ज्ञेयाः । एवमेव सेनापत्यादिगृहेषु स्वस्वविस्तारवशेन कल्पना ज्ञेया ।

तत्र भूमिकासंख्यामाह विश्वकर्मा—

यजन्ते राजसूयाद्यैः क्रतुभिर्येऽवनीश्वराः[6] ।
तलैरद्धाष्टमैस्तेषां कारयेद् भवनोत्तमम् ।।२०६।।

---

१. १७।३।१५।१३।८। —ग ।
२. शन्तिवास—ख ।
३. बृहत्संहिता, ५३।२०-२१ ।
४. बृहत्संहिता, ५३।२२ ।
५. एक- क, ग ।
६. क्रतुभिर्य्य वनेश्वराः—ख ।

तथार्द्धसप्तमैरेव विप्राणां कारयेद् गृहम् ।
अर्द्धषष्ठैः क्षत्रियाणां वैश्यानामर्द्धपञ्चमैः ।
त्रिभिः सार्द्धैश्च शूद्राणां भवनं शुभदं स्मृतम् ।।२०७।।

## ।। अथ भित्ति[1]प्रमाणम् ।।

वराहः—

व्यासात् षोडशभागः सर्वेषां सद्मनां भवेद्भित्तिः ।
पक्वेष्टकाकृतानां दारुमयानां तु न विकल्पः[2] ।।२०८।।

## ।। अथ द्वारज्ञानम् ।।

एकादशभागयुतः ससप्ततिर्नृपबलेशयोः क्रमः[3] ।
उच्छ्रायोऽङ्गुलतुल्यो[4] द्वारस्यार्धेन विष्कम्भः[5] ।।२०९।।

यथा राजगृहव्यासोऽष्टोत्तरं शतं, तस्यैव [वै] कादशांशो दश किञ्चिदूनास्ते सप्ताधिका आ [अ] शीतिः, तद् व्यासयुतमष्टाशीत्यधिकं शतं एतावन्त्यङ्गुलानि द्वारोच्छ्रायः । अस्यार्द्धं नवनवत्यङ्गुलानि[6] विस्तार इति विज्ञेयम् ।

विप्रादीनां व्यासात पञ्चांशोऽष्टादशाङ्गुलसमेताः [तः] ।
साष्टांशो विष्कु[क]म्भो द्वारस्य त्रिगुण उच्छ्रायः[7] ।।२१०।।

## ।। अथ शाखोदुम्बरादीनां ज्ञानम् ।।

उच्छ्रायहस्तसंख्यापरिमाणान्यङ्गुलानि बाहुल्यम् ।
शाखाद्वयेऽपि कार्यं सार्द्धं तत् स्यादुदुम्बरयोः[8] ।।२११।।

---

१. तिथि—क । २. बृहत्संहिता, ५३।२३ ।
३. क्रमशः—ख । ४. छायोङ्गुलतुलो—ख ।
५. बृहत्संहिता, ५३।२४ । ६. चतुर्नवति—क, ग ।
७. बृहत्संहिता, ५३।२५ । ८. साखाद्वयेऽपि मन्दिरे सर्वस्वाभिमुखा—ख ।

उच्छ्रायात् सप्तगुणादशीतिभागः[1] पृथुत्वमेतेषाम् ।
नवगुणितेऽशीत्यंशे स्तम्भः सदशांशहीनोऽग्रे[2] ॥२१२॥

यथा नृपगृहद्वारोच्छ्रायोऽङ्गुलानि अष्टाशीत्यधिकं शतम्। अतो हस्ताः षष्टांशोना अष्टौ एतावन्त्यङ्गुलानि शाखाद्वये बाहुल्यम्[3] । इदं सार्द्धमुदुम्बरयोर्बाहुल्यं द्वादशाङ्गुलानि शाखयोरुपर्यधः[4] स्थिते काष्ठे उदुम्बरे तना [?] नृपद्वारोच्छ्रायोऽष्टाशीत्यधिकं शतम् इदं सप्ततिगुणमशीत्याप्तं सार्द्धानि षोडशाङ्गुलानि एतत्सर्वेषां पृथुत्व तथा राजगृहेऽधस्तने भूमिकामानम् । एवं द्वादशहस्ताः पादोना इदमेव स्तम्भोच्छ्र्यं, अस्मान्नवगुणितादशीत्यंशोऽष्टाविंशत्यङ्गुलानि । एतत्स्तम्भमूले पृथुत्वमिदं दशांशहीनमग्रे ।

## ॥ अथ स्तम्भनामानि ॥

समचतुरस्त्रो रुचको वज्रोऽष्टास्रिर्द्विवज्रको द्विगुणः ।
द्वात्रिंशता तु मध्ये प्रलीनको वृत्त इति वृत्तः ॥२१३॥

स्तम्भं विभज्य नवधा वहनं भागो घटोऽस्य भागोन्यः ।
पद्मं तथोत्तरोष्ठं कुर्याद् भागेन भागेन ॥२१४॥

स्तम्भसमं बाहुल्यं भारतुलानामुपर्युपर्यासाम् ।
भवति तुलोपतुलानामूनं पादेप [?न] पादेन[5] ॥२१५॥

ऊह्यते[6] धार्यते भूमौ स्तम्भो येन तद्वहनं, तदाद्ये नवांशे ततः कलशादयः। केचिदुत्तरौष्ठमष्टमे नवमे च कमलमिच्छन्ति। भारं तोलयन्तीति भारतुला, स्तम्भस्योपरि[7] तिर्यक् कृत्वा यत्काष्ठं दीयते। बहुत्वात् बहुवचनम् । भारतुलोपरि यत्काष्ठं तत्तुलोपतुलसंज्ञम् । तत्र राजगृहे स्तम्भस्य पृथुत्वमष्टा विंशत्यङ्गुलानि, तदेव भारतुलानामिदं पादोनमेकविंशत्यङ्गुलानि तुलोप-

---

१. भावः—ग ।
२. बृहत्संहिता, ५३।२६-२७ ।
३. बाहुलम्—क ।
४. साखयोरुपर्यषः – ख ।
५. बृहत्संहिता, ५३।२८-३० ।
६. द्रुह्यते—ग ।
७. स्तम्भस्योपपरि—क, ग ।

तुलानां वीप्सया च तिस्रता ग्राह्या इति वर्णयन्ति भारतुला उपतुला तुलोप-तुला चेति ।

अत्र वास्तुप्रकरणे चतुः शालानि भवन्ति । तानि यथा—

अप्रतिषिद्धालिन्दं समन्ततो वास्तु सर्वतोभद्रम् ।
नृपविबुधसमूहानां कार्यं द्वारैश्चतुर्भिरपि ॥२१६॥

नन्द्यावर्तमलिन्दैः शालाकुड्यात् प्रदक्षिणान्तगतैः ।
द्वारं पश्चिममस्मिन् विहाय शेषाणि कार्याणि ॥२१७॥

द्वारालिन्दोऽप[न्त]गतः प्रदक्षिणोऽन्यः शुभस्ततश्चान्यः ।
तद्वच्च वर्द्धमाने द्वारं तु प्रदक्षिणं[1] कार्यम् ॥२१८॥

अपरोक्ष्य [क्ष] गतोऽलिन्दः प्रान्तगतौ तदुत्थितौ चान्यौ ।
तदवधिविधृतश्चान्यः प्राग्द्वारं स्वस्तिकं शुभदम् ॥२१९॥

प्राक्पश्चिमावलिन्दावन्त्यागतौ तदवस्थितौ ।
रुचके द्वारं न शुभदमुत्तरतोऽन्यानि शस्तानि ॥२२०॥

श्रेष्ठं नन्द्यावर्तं सर्वेषां वर्धमानसंज्ञं च ।
स्वस्तिकरुचके मध्ये शुभदं नृपादीनाम् ॥२२१॥

## ॥ अथ त्रिशालानि ॥

उत्तरशालाहीनं हिरण्यनाभं त्रिशालकं धन्यम्[2] ।
प्राक्शालया वियुक्तं सुक्षेत्रं वृद्धिदं वास्तुम् ॥२२२॥

याम्याहीनं चुल्ली[3] त्रिशालकं वृ [वि] त्तनाशकरमेतत् ।
पक्षघ्नमपरया वर्जितं सुतध्वंसै [स] वैरकरम्[4] ॥२२३॥

---

१. बृहत्संहितायाः प्रकाशिते पाठे (५३।३३) दक्षिणद्वारस्य निषेधः प्राप्यते ।
२. धान्यम्—क । ३. चुल्ही –क, ग ।
४. बृहत्संहिता, ५३।३७-३८ ।

—५—

चतुःशाल[स्य] या कृतिरेकदिग्वर्जितालिन्दवर्जिता त्रिशालमित्युत्पलः ।

## ।। अथ द्विशालानि ।।

सिद्धार्थमपरयाम्ये यमसंज्ञं[1] [यमसूर्यं] पश्चिमोत्तरे शाले ।
दण्डाख्यमुदक्पूर्वे वाताख्यं प्राग्युता याम्या ।।२२४।।

पूर्वापरे तु शाले गृहचुल्ली[2] दक्षिणोत्तरे काचम् ।
सिद्धार्थेऽर्थावाप्तिर्यमसूर्ये गृहपतेर्मृत्युः ।।२२५।।

दण्डवधो दण्डाख्ये कलहोद्वेगः सदैव वाताख्ये ।
वित्तविनाशश्चुल्ल्यां[3] ज्ञातिविरोधः स्मृतः काचे[4] ।।२२६।।

एवमाचार्येण चतुःशालत्रिशालद्विशालानि पञ्चदशगृहाणि उक्तानि । ब्रह्मशम्भुना तु बहवो गृहभेदो उक्तः —

वेश्मनामेकशालानां भवेदष्टोत्तरं शतम् ।
द्विपञ्चाश [द्] द्विशालानां त्रिशालानां त्रिसप्ततिः ।।२२७।।

इत्यादिर्विश्वकर्मणा पुनरितो बहु उक्तास्ते वास्तुशास्त्रोक्तविधिना वेदितव्याः । इह गौरवभयात् पराधिकारचर्चाः याश्चानौचिताः न निरूपिताः । राजमार्तण्डः —

आयतं चतुरस्रं च वृत्तं भद्रासनं तथा ।
चक्रं विषमबाहुः स्यात् त्रिकोणं शकटाकृतिम् ।।२२८।।

दण्डं पणवसंस्थानं मुरजं च बृहन्मुखम् ।
व्यञ्जनं [व्यजनं] कूर्मपृष्ठं च धनुःसर्पं [?] च षोडशम् ।।२२९।।

---

१. यमसूतम्—ग । यमसूर्यमिति पाठः बृहत्संहितायां प्राप्यते ।
२. गृहचुल्ही—क, ग । ३. चुल्ह्याम्—क, ग ।
४. बृहत्संहिता, ५३।३९-४२ ।

आयते सिद्धयः सर्वाश्चतुरश्रे धनागमः ।
भद्रासने कृतार्थत्वं वृत्ते पुष्टिविवर्धनम् ॥२३०॥

चक्रे दारिद्र्यमेवोक्तं शोको विषमबाहुके ।
नृपाद् भीतिस्त्रिकोणे स्याच्छकटे च धनक्षयः ॥२३१॥

नश्यन्ति पश्यवो [पशवो] दण्डे पणवे च धनक्षतिः ।
मुरजे म्रियते भार्या बन्धुनाशो बृहन्मुखे ॥२३२॥

व्यञ्जने [व्यजने] वित्तविनाशश्च कूर्मे बन्धनपीडनम् ।
सूर्ये धनक्षयं विद्याच्चापे चौरभयं भवेत् ॥२३३॥

आयतं चतुरस्रं च वृत्तं भद्रासनं तथा ।
चत्वार्येतानि कार्याणि गृहस्थेन श्रियोऽर्थिना ॥२३४॥

एका चेद्दक्षिणा शाला द्वे च दक्षिणपश्चिमे ।
तावत् पूर्वे न कुर्वीत यावन्नोत्तरो भवेत् ॥२३५॥

अथ वसिष्ठसंहितायां दशशाला उक्तास्तासां चालिन्दभेदेन प्रत्येकं षोडशभेदत्वमिति शतं षष्ठ्यधिकं भेदाः भवन्तीत्युक्तम् । तद्यथा एकद्वित्रिचतुःपञ्चषट्सप्ताष्टदशाह्वयाः शालाः स्युर्दशमे दास्ताः (?) सहिताः नवशालया अलिन्दभेदैरेताः स्युः । प्रत्येकं दशषड्विधाः १६ षष्ठ्या तु सहितं शालाशतमेवं प्रकीर्तितम् ।

गुरोरधो लघुः स्थाप्यः पुरस्तादूर्द्ध्वन्न्यसेत् ।
गुरुभिः पश्चिमं पूर्यं सर्वलघ्ववधिर्विधिः ॥२३६॥

अत्र दिशां चतुष्टयत्वाच्चत्वार एव गुरवः स्थाप्याः । विदिशां द्वारानौचित्यादग्रहणं, तद्यथा—ऽऽऽऽ ध्रुवम् ॥१॥, ।ऽऽऽ धान्यम् ॥२॥, ऽ।ऽऽ जयम् ॥३॥, ।।ऽऽ [1]नन्दम् ॥४॥, ऽऽ।ऽ खरम् ॥५॥, ।ऽ।ऽ[2] कान्तम् ॥६॥, ऽ।।ऽ मनोरमम् ॥७॥, ।।।ऽ सुवक्त्रम् ॥८॥, ऽऽऽ।[3]

१. ।ऽऽ—क ।
२. ऽ।ऽ क; ।ऽ। ग ।
३. ।ऽऽऽ—ग ।

दुर्मुखम् ।।९।।, ।ऽऽ।[1] क्रूरम् ।।१०।।, ऽ।ऽ। विपक्षम् ।।११।।, ।।ऽ।[2] धनदम् ।।१२।।, ऽऽ।।[3] क्षयम् ।।१३।।, ।ऽ।।[4] आक्रन्दम् ।।१४।।, ऽ।।। विपुलम् ।।१५।।, ।।।। विजयम् ।।१६।।

अथैतेषा[म]नुद्वारोऽलिन्दं प्रस्ताराक्षसम्भिन्नाः स यथा तत्रोपर्यक्रमतो दिशः पूर्वाद्याः वेद्यास्तु सुगृहद्वारप्रादक्षिण्येनालिन्दं विदध्यात् —

स्यादलिन्दं लघुस्थाने नालिन्दं गुरुणाश्रितम् ।
प्रदक्षिणैर्गृहद्वारारा (?) लिन्दैर्दशषड्भिदाः [षड्विधाः] ।।२३७।।

ध्रुवं धान्यं जयं नन्दं खरं कान्तं मनोरमम् ।
सुवक्त्रं दुर्मुखं क्रूरं विपक्षं धनदं क्षयम् ।
आक्रन्दं विपुलं शश्वत् षोडशं विजयाभिधम् ।।२३८।।

इत्येकशालभेदाः स्युः । शेषाणामेवमेव हि —

ध्रुवसंज्ञे गृहं त्वाद्यं धनधान्यसुखप्रदम् ।
धान्यं धान्यप्रदं नृणां जयं स्याद्विजयप्रदम् ।।२३९।।

नन्दं स्त्रीहानिर्नूनं खरं सम्पद्विनाशनम् ।
पुत्रपौत्रप्रदं कान्तं श्रीपदं स्यान्मनोरमम् ।।२४०।।
सुवक्त्रं भोगदं नूनं दुर्मुखं विसुखप्रदम् ।
धनदं धनदं गेहं क्षयं सर्वक्षयप्रदम् ।।२४१।।

आक्रन्दं शोकजननं विपुलं श्रीयशः प्रदम् ।
विजयं नाम सदनं धनदं विजयप्रदम् ।।२४२।।

ध्रुवाख्यं द्वित्रिभूमाद्यं स्यादिदं चेद्धरातले ।
सुवर्णसि[शि]खरः सोऽपि प्रासादः सर्वभूभुजाम् ।।२४३।।

सौधाख्यं सदनं शश्वद्धनधान्यप्रदं सदा ।
प्रासादसदनं शश्वद्धर्मारोग्यसुखप्रदम् ।।२४४।।

---

१. ऽऽ—क । २. ।ऽऽ।— ग ।
३. ।ऽऽ—ग । ४. ।ऽऽ—ग ।

पुरतो मण्डपं चास्य तदेव भुवनेश्वरम् ।
तद्गृहं विश्वरूपाख्यं सर्वसम्पत्प्रदं सदा ॥२४५॥

धनाख्यं सदनं द्वित्रिचतुःपञ्चादिभूमिकम् ।
भूतिचन्द्रं महीशानां सुतसुखप्रदम् ॥२४६॥

जयाख्यं नाम सदनं द्वितीया धनुरभूमिकम् ।
पूर्णचन्द्रं महद्गेहं भार्यानाशप्रदं सदा ॥२४७॥

खरगेहं यदा यत्र द्वितीया धनुरभूमिकम् ।
पूर्णचन्द्रं महद्गेहं भार्यानाशप्रदं सदा ॥२४८॥

खरगेहं यदा यत्र द्वितीया धनुर्भूमिकम् ।
असुखं नाम सदनं दुःखशोकभयप्रदम् ॥२४९॥

प्रासादो वाथ सौधो वा सुवक्त्रसदनं यदा ।
हाटकं सदनं नाम सदा हाटकदं शुभम् ॥२५०॥

प्रासादो वाथ सौधो वा दुर्मुखं सदनं यदि ।
दुर्मुखं सदनं नाम सर्वकार्यविनाशनम् ॥२५१॥

प्रासादो वाथ सौधो वा क्रूराख्यं सदनं यदि ।
क्रूराख्यं सदनं नाम दुःखशोकप्रदं सदा ॥२५२॥

प्रासादो वाथ सौधो वा विपक्षसदनं यदा ।
शत्रुसंज्ञं च तद्गेहं सर्वदा शत्रुभीतिदम् ॥२५३॥

प्रासादो वाथ सौधो वा धनदाख्यं गृहं भवेत् ।
धनदाख्या[ख्य]प्रदं गेहं धनधान्यसुखप्रदम् ॥२५४॥

प्रासादो वाथ सौधो वा क्षपाख्यं सदनं यदा ।
विपुलाख्यं गृहं यत्र सौधः प्रासाद एव वा ॥२५५॥

प्रासादो वाथ सौधो वाथाक्रन्दं सदनं यदि ।
आक्रन्दं नाम तद्गेहं चौरभीतिप्रदं सदा ॥२५६॥

विपुलाख्यं गृहं यत्र सौधः प्रासाद एव वा ।
विपुलं नाम सदनं विपुलं धनधान्यदम् ।।२५७।।

विजयाख्यं यदा नूनं सौधः प्रासाद एव च ।
विजयं नाम सदनं सर्वदा विजयप्रदम् ।।२५८।।

एकशाला यदा नूनं चतुर्द्वारसमन्विता ।
मनोरथप्रदं गेहं नाम्ना तद्विश्वतोमुखम् ।।२५९।।

तदेवापर वै युक्तं कोणे मध्ये च तद्गृहम् ।
पुण्डरीकं नाम भवेत् सर्वकामफलप्रदम् ।।२६०।।

पश्चिमं द्वारहीनं तद्गृहं श्रीनिलयाह्वयम् ।
श्रीपदं सर्वदा राज्ञां पुत्रपौत्रप्रवर्द्धनम् ।।२६१।।

उदग्द्वारविहीनं तत् शूकरस्य पदाह्वयम् ।
शूकराद्[1] भयदं नूनमथवा भूपतेर्भयम् ।।२६२।।

पूर्वद्वारविहीनं तद् व्याघ्रस्य पदसंज्ञकम् ।
चतुष्पदाद् भयदं गेहमथवा तस्कराद् भयम् ।।२६३।।

दक्षिणद्वारहीनं तद् गृहं शेखरसंज्ञकम् ।
सर्ववस्तुप्रदं गेहं सर्वरत्नप्रदं सदा ।।२६४।।

इत्येकशालभेदाः स्युः । द्विशालभेदः उच्यते —

याम्यपश्चिमयोर्नूनं द्विशाला कमलाकरा ।
नामतः सर्वदा नृणां श्रीपदा सर्वभोगदा ।।२६५।।

पश्चिमोत्तरयोः शाला श्वापदं नाम नामतः[2] ।
शत्रुभ्यो भयदा शश्वदथवा चौरभीतिदा ।।२६६।।

पूर्वदक्षिणयोर्नूनं द्विशाला सर्पदंष्ट्रिका ।
आधिव्याधिव्यालचौरविषेभ्यो भयदा सदा ।।२६७।।

---

१. सूकराद्—ख । २. नामः—ग ।

यास्यपश्चिमयोरेव द्विशाला मङ्गलप्रदा ।
प्रासादो वाथ सौधो वा तस्यामेव तु कारयेत् ॥२६८॥

अन्यदिक्षु द्विशालासु नवं शोकं लभेन्नरः ।
तस्माद् द्विशालं त्वत्र प्रयत्नात् परिवर्जयेत् ॥२६९॥

त्रिशालचतुश्शालानि वाराहेणैवोक्तानि । विशेषः पुनरुच्यते —

चतुःशालस्य पञ्चभेदाः अलिन्दवशेन द्वारवशेन च ॥२७०॥

तेनोक्ताः वसिष्ठेन तु द्वारमात्रेऽभिप्रायेणोक्ताः । तस्मादेवमवगम्यते संज्ञाप्रयोजकं द्वारम् । अलिन्दं पुनः शोभातिशयाधायकमिति । अन्ये पुनश्चतुःशालस्य भेदाः —

चतुःशालां मध्यभागे कुर्यात् पूर्वामुखं गृहम् ।
गृहराडिति विख्यातं सर्वसम्पत्प्रदं सदा ॥२७१॥

तद्गृहं यास्यवक्त्रं कुबेरपदसंज्ञकम् ।
शाश्वत्कुबेरगृहवदालयं सर्वसम्पदाम् ॥२७२॥

प्रत्यग्वक्त्रं मन्दिरं चेन्महेन्द्रपदसंज्ञकम् ।
इन्द्रवेश्म यथा सर्वसम्पद्युक्तं तथैव तत् ॥२७३॥

उदङ्मुखं तत्सदनं वारुणं पदसंज्ञकम् ।
सर्वरत्नालयं गेहं सर्वभोगसुखावहम् ॥२७४॥

प्रासादो वाथ सौधो वा तद् गृहं वै भवेद्यदि ।
तद् चन्दशेखरपदं निधीनामालयं भृशम् ॥२७५॥

कोणेष्वपव[?]रं कुर्यान्महेन्द्रपदसंज्ञकम् ।
माहेन्द्रं निलयं यद्वत् तद्वत् तत्सम्पदालयम् ॥२७६॥

अस्यामपि द्वित्रिचतुःपञ्चषट्सप्तमूर्तिकैः ।
षोडशान्यानि जानि (?) जानीयात् प्रस्तृतेः क्रमात् ॥२७७॥

पञ्चादिदशपर्यन्ताः शालास्त्येवं प्रकल्पयेत् ।
प्रस्तारनामादिरूपफलैर्यो वास्तुकोविदः ॥२७८॥

अथोपकारणगृहस्थानानि उच्यन्ते । तत्र वसिष्ठः एव —

**ऐन्द्र्यां दिशि स्थान [स्नान][1] गृहमाग्नेय्यां पव[?च]नालयम् ।**
**याम्यायां शयनं वेश्म नैर्ऋत्यां शस्त्रमन्दिरम् ।।२७९।।**

**वारुण्यां भोजनगृहं वायव्यां धन[2]मन्दिरम् ।**
**उदीच्यां हाटकं सद्म ईशान्यां देवमन्दिरम् ।।२८०।।**

**ध्वजधूमहरिश्वाख्याः वृषगदर्भकुञ्जराः ।**
**ध्वांक्षश्चैते क्रमादायाः स्वस्थानस्थाः गृहे शुभाः ।।२८१।।**

**इन्द्राग्न्योर्मथनं मध्ये याम्याग्न्योर्घृतमन्दिरम् ।**
**यमराक्षसयोर्मध्ये पुरीषत्यागमन्दिरम् ।।२८२।।**

**राक्षसाम्बुपयोर्मध्ये विद्याभ्यासमन्दिरम् ।**
**तोयेशानिलयोर्मध्ये रोदनमन्दिरम् ।।२८३।।**

**ततः कामोपभोगसदनं वायुकौबेरमध्यतः ।**
**कौबेरेशानयोर्मध्ये चिकित्सामन्दिरं शुभम् ।।२८४।।**

**पुरन्दरेशयोर्मध्ये सर्ववस्तुबु[3] सङ्ग्रहम् ।**
**सदनं कारयेदेवं क्रमादुक्तानि षोडशा[नि] ।।२८५।।**

नारदस्तु —

**भाण्डागारं तूत्तरस्यां शुभमन्दिरम् ।।२८६।।**

इत्याह । विश्वकर्मा पुनः —

**उत्तरस्यां जलस्थानं पूर्वस्यां श्रीगृहं तथा ।।२८७।।**

इत्याह । पुनर्वसिष्ठः —

**पश्चिमे दक्षिणे चैव गवाक्षो मन्दिरस्य च ।**
**स्वगृहात् पश्चिमे याम्ये पितृस्वाग्रजमन्दिरम् ।।२८८।।**

---

१. वास्तुग्रन्थेषु (वास्तुप्रबोध, १६४, गृहरत्नभूषण, १३२) पूर्वदिशि स्नानगृहमुक्तम् । २. धान्य—ख । ३. सर्वमस्तुहु—ग ।

गृही परिगृहादीनामायमात्रे प्रकल्पयेत् ।
स षड्वर्गं शङ्कुमपि स्थापये[द्]दाघवेश्मनः ।।२८९।।

ध्वजः सिंहे तौ च गजे चेते गवि शुभप्रदाः ।
वृषो न पूजितोऽन्यत्र ध्वजःपूजितः ।।२९०।।

वाराहः[1] —

प्राच्यादिस्थे सलिले सुतहानिः शिखिभयं रिपुभयं च ।
स्त्रीकलहः स्त्रीदौष्ट्यं नैःस्व्यं वित्तात्मजविवृद्धिः ।।२९१।।

अयं च दिशां निर्देशो गृहद्वारस्य पूर्वत्वमाश्रित्य तदुक्तं विश्वकर्मणा—

पूर्वादिदिग्विनिर्देशो गृहद्वारविवक्षया ।
भास्करोदयदिक्पूर्णं न विज्ञेया यथाक्षते ।।२९२।।

तत्रैव गृहात्प्रवासः पयसः पूर्वोत्तरगतिः शुभः ।
कथितो मुनिभिः पूर्वैरशुभस्त्वन्यदिग्गतिः ।।२९३।।

अथ वास्तुनि एकाशीतिपदविभागः । शल्यज्ञानं शुभाशुभनिर्णयाधु(?)-[दि] प्रयोगी [गः] प्रदर्श्यते वाराह[2]संहितायाम् —

एकाशीतिविभागे दश दश पूर्वोत्तरायताः रेखाः ।
अन्तस्त्रयोदश सुराः द्वात्रिंशद् बाह्यकोष्ठस्थाः ।।२९४।।

शिखि[3]पर्जन्यजयन्तेन्द्र[4]सूर्यसत्या भृशोऽन्तरिक्षश्च ।
ऐशान्याद्या क्र[म]शो दक्षिणपूर्वेऽनिलः कोणे ।।२९५।।

पूषा वितथगृहक्षतयमगन्धर्वाख्यभृङ्गराजमृगाः ।
पितृदौवारिकसुग्रीवकुसुमदन्ताम्बुपत्यसुराः ।।२९६।।

शोषोऽथ पापयक्ष्मा रोगः कोणे ततोऽहिमुख्यौ च ।
भल्लाटसोमभुजगास्ततोऽदितिर्दितिरिति क्रमशः ।।२९७।।

---

१. बृहत्संहिता, ५३।११९ ।        २. बृहत्संहिता, ५३।४२-५० ।
३. सिखि—क, ग ।        ४. यजन्तेन्द्र—क, ग ।

मध्ये ब्रह्मा नवकोष्ठकाधिपोऽस्यार्यमास्थितः प्राच्याम् ।
एकान्तरात् प्रदक्षिणमस्मात्सविता विवस्वांश्च ॥२९८॥
विबुधाधिपतिस्तस्मान्मित्रोऽन्यो राजयक्ष्मनामा च ।
पृथिवीधरापवत्सावित्येते ब्रह्मणः परिधौ ॥२९९॥
आपो नामैशाने कोणे हौताशने च सावित्रः ।
जय इति च नैर्ऋते रुद्र आनिलेऽभ्यन्तरपदेषु ॥३००॥
आपस्तथापवत्सः पर्जन्यो[1]ऽग्निर्दितिश्च वर्गोऽयम् ।
एवं कोणे कोणे पदिकाः स्युः पञ्च पञ्च सुराः ॥३०१॥
बाह्ये द्विपदाः शेषाः ते विबुधाः विंशतिः समाख्याताः ।
शेषाश्चत्वा[रो]ऽन्ये त्रिपदा दिक्ष्वर्यमाद्यास्ते ॥३०२॥

अत्रेशानकोणे केचिच्छिवं पठन्ति वसिष्ठसंहितायाम्, उभयोरप्यभिधानाद्विह विकल्पः । बहुसम्मतस्तु पक्ष शिखी अयमर्थः । कोणस्थशिख्यादयः स्वोभयपार्श्वस्थितदेवताद्वयसहिताः कोणगत्याधोऽधोवर्तिदेवताद्वयसहिताश्च प्रत्येकं पञ्चपञ्चेति पदिकाः । यथा ईशकोणे शिखी, तत्पार्श्वयोः पर्जन्यो दित [ति] को (?) ऽधोभागे चापः [आ] पवत्सौ चेति, ईशकोणे तथाग्निकोणेऽनिलपस्तदुभयपार्श्वे पूषाकाशौ, कोणगत्या सावित्रमित्रौ चेति, एवमपरत्रोहनीयम् । एवं कोणद्वयान्तरालवर्तिदिक्पंक्तिषु प्रत्येकं पञ्चजनयन्ताद्याः [जयन्ताद्याः] इति विंशतिर्द्विपदा, इति चत्वारिंशत्पदानि पूर्वोक्तैः सह मिलित्वा षष्टिर्भवन्ति । देवाश्च पञ्चचत्वारिंशदिति । अन्ये तु क्षेत्राद् बहिरष्टौ देवानन्यानाहुर्यथा —

ईशानादिषु कोणेषु राक्षस्यो[र]समाश्रिताः ।
चरकी च विदारी च पूतना पापराक्षसी ॥३०३॥
वास्तोर्बाह्ये चरक्याद्याः शङ्कुस्थाः[2] पदवर्जिताः ।
स्कन्धो[दो]यमश्च जम्भश्च पिलिपिच्छा ग्रहा इमे ।
वास्तोर्बाह्ये क्रमादि[द्दि]क्षु कथिताः पदवर्जिताः ॥३०४॥

---

१. पर्जन्यो दिति—क, ग । २. शकुन—क, ख ।

एवं देवास्त्रिपञ्चाशद्वास्तौ मण्डूकसंज्ञके [काः] ।

## ॥ अथाङ्गविभागः ॥

वराहसंहितायाम्[१]—

पूर्वोत्तरदिङ्मूर्धा पुरुषोऽयमवाङ्मुखोऽस्य शिरसि शिखी ।
आपो मुखे स्तनेऽस्यार्यमा ह्युरस्यापवत्सश्च ॥३०५॥

पर्जन्याद्या बाह्ये दृक्श्रवणोत्तरस्थलांसमा[?गा]देवाः ।
सत्याद्या पञ्च भुजे हस्ते सविता[च]समा[?सा]वित्रः ॥३०६॥

वितथो गृहक्षतयुतः पार्श्वे जठरे स्थितो विवस्वांश्च ।
ऊरु जानु च[२] जङ्घे स्फिगिति यमाद्यैः परिगृहीतम् ॥३०७॥

जानुशब्दः पुंलिङ्गोऽप्यस्ति ।

एते दक्षिणपार्श्वे स्थानेष्वेवं च वामपार्श्वथाः ।
मेढ्रे शक्रयजन्तौ[जयन्तौ] हृदये ब्रह्मा पितृभिरंध्री ॥३०८॥[३]

## ॥ अथ चतुष्षष्टिपदविभागः ॥

अष्टाष्टकपदमथवा कृत्वा रेखाश्च कोणगास्तिर्यक् ।

अयमर्थः । नवनवपूर्वोत्तराः रेखाः कृत्वा चतुषष्टिपदानि रचयेत् । तत्र कोणचतुष्के तिर्यको [?क्को] ष्ठत्रयव्यापिनीश्चतस्रो रेखाः कुर्यात् ।

## ॥ अथात्र देवताविभागः ॥

ब्रह्मा चतुष्पदोऽस्मिन्नै[न]र्द्धपदाः ब्रह्मकोणस्थाः[४] ॥३०९॥

१. बृहत्संहिता, ५३।५१-५३ । २. ख ।
३. बृहत्संहिता, ५३।५४ । ४. बृहत्संहिता, ५३।५५ ।

अष्टौ बहिश्च कोणेष्वर्द्धपदोस्तत्तदुभयस्थिताः सार्द्धाः ।

अष्टावित्युभयत्र योज्यम् ।

उक्तेभ्यो ये शेषास्ते द्विपदाः विंशतिः प्रोक्ताः[1] ।।३१०।।

वसिष्ठादयस्तु इदं वास्तुनरमिच्छन्ति । अनेन हि कोणस्थं द्वारं सुखेन जायते निःसन्दिग्धम् ।

## ।। अथ मर्मज्ञानम् ।।

सम्पाता[2] वंशानां मध्यानि यानि च पादानाम् ।
मर्माणि तानि विद्यान्नैतानि परिपीडयेत्प्राज्ञः[3] ।।३११।।

तान्यशुचिभाण्डकीलस्तम्भाद्यैः पीडितानि शल्यैश्च ।
गृहभर्तुस्तत्तुल्ये पीडामङ्गे प्रयच्छन्ति ।।३१२।।

कण्डूयते यदङ्गं गृहभर्तुर्यत्र वाऽमराहुत्याम् ।
अशुभं भवेन्निमित्तं विकृतिश्चाग्नेः सशल्यं तत् ।।३१३।।

धनहानिर्दारुमये पशुपीडा रुग्भयानि चास्थिकृते ।
अपि नागदन्तको मर्मसंस्थितो दोषकृद् भवति[4] ।।३१४।।

मर्मस्थ इत्युक्तेरन्यत्रशल्यं तुच्छफलम् ।

रोगाद् वायुं पितृतो हुताशनं शोषसूत्रमपि वितथात् ।
मुख्याद् भृशं जयन्ताच्च भृङ्गमदितेश्च सुग्रीवम् ।।
तत्सम्पाता नव ये तान्यतिमर्माणि सम्प्रदिष्टानि[5] ।।३१५।।

रोगाद्वायुं यावदवपत्ति[स्ति]र्यक् [सू]त्रं संदध्यादेवमपरत्र । एवं कृते सूत्राणां परस्परसम्पाते मर्मस्थानं ज्ञेयम् ।

---

१ बृहत्संहिता, ५३।५६ । २. संतापा—ख ।
३. ख । पीडयेत्प्राज्ञः - क, ग । ४. बृहत्संहिता, ५३।५७-६२ ।
५. बृहत्संहिता, ५३।६३-६४ ।

परिमाणमाह । पञ्चपदस्याष्टांशस्तत् प्रोक्तं मर्मपरिमाणम् । पदशब्देनैकाशीतितमोऽशश्चतुःषष्टितमो वांऽश इह गृह्यते ।

॥ अथ वंशश्च शिरापार्श्वमानम् ॥

पदहस्तसंख्यया मितानि वंशोऽङ्गुलानि विस्तीर्णः ।[1]
वंशव्यासोऽप्यर्द्धः शिराप्रमाणं विनिर्दिष्टम्[2] ॥३१६॥

रोगाद्वायुमित्यादिसूत्रषडङ्कः वंशशब्देनोच्यते । शिराशब्देन पूर्वापरायताः दक्षिणोत्तरायताश्च दश दश रेखाश्च ज्ञेयाः । तथा च शिराणां नामानि वास्तुतन्त्रे —

शान्ता यशोवती कान्ता विशाला प्राणवाहिनी ।
सती च सुमना नन्दा सुरता तथा[3] ॥३१७॥

पूर्वापरा यता ह्येता उदग्याम्यां श्रिताः शृणु ।
हिरण्या सुव्रता लक्ष्मीर्विभूतिर्विमला श्रिया ॥३१८॥

जया ज्वाला विशोका च तथेता द्[द]शमी स्मृताः ।
एकाशीतिपदे ह्येताः शिराश्च परिकीर्तिताः ॥३१९॥

श्रिया यशोवती कान्ता सुप्रियापि परा शिवा ।
सुशोभा सन्धिनी ज्ञेया तथेता नवमी स्मृता ॥३२०॥

पूर्वापराः ह्येताश्चतुःषष्टिपदे स्थिताः ।
धन्या धरा विशाला वा स्थिररूपा गदा स्पृशा ।
विभवा प्रभवा चान्याः सौम्ययाम्याश्रिताः शिराः ॥३२१॥

---

१. स्तीर्णः—ग ।  २. बृहत्संहिता, ५३।६५ ।

३. बृहत्संहितायां (५३।६५) श्लोकेन सह उद्धृतोऽयं श्लोकः । तत्र 'सती च सुमना नन्दा सुभद्रा सुरथा तथा' इति पाठः प्राप्यते ।

इति वराहः[1]—

सुखमिच्छन् ब्रह्माणं यत्नाद्रक्षेद् गृही गृहान्तस्थम् ।
उच्छिष्टाद्युपघाताद् गृहपतिरूपतप्यते तस्मिन् ॥३२२॥

दक्षिणभुजेन हीने वास्तुनरेऽर्थक्षयोऽङ्गनादोषाः ।
वामेऽर्थधान्यहान्यः [?निः] शिरसि गुणैर्हीयते सर्वैः ॥३२३॥

स्त्रीदोषाः सुतमरणं प्रेष्यत्वं चापि चरणवैकल्ये ।
अविकलपुरुषे वसतां मानार्थयुतानि सौख्यानि ॥३२४॥

गृहनगरग्रामेषु च सर्वत्रैवं प्रतिष्ठिताः देवाः ।
तेषु च यथानुरूपं वर्णाः विप्रादयो वास्याः ॥३२५॥

वासगृहाणि च विन्द्याद्विप्रादीनामुदग्दिगाद्यानि ।
विशतां च यथा भवनं भवन्ति तान्येव दक्षिणतः ॥३२६॥

## ॥ अथ द्वारनिर्णयः ॥

माण्डव्यः —

नवभागं गृहं कृत्वा पञ्चभागं तु दक्षिणे ।
त्रिभागं वामतः कृत्वा शेषं द्वारं प्रकल्पयेत् ॥३२७॥

विश्वकर्मा —

देवागारे विहारे च प्रजायां मण्डपेषु च ।
प्रतोल्यां न [च] मखे चैव मध्ये द्वारं निवेशयेत् ॥३२८॥

एषु गृहान्तर्गतस्य ब्रह्मणो न वेघ [धः] इत्युक्तं भवति ।

एकभित्तिमुखं बद्धं कारयेद् यो गृहद्वयम् ।
यमतुल्यं तदा नाम भर्तुर्गेहं विनाशनम् ॥३२९॥

---

१. बृहत्संहिता, ५३।६६-७० ।

वसिष्ठसंहितायां तु द्वात्रिंशद् द्वाराणि, फलानि प्रत्येकमभिहितानि । यथा—

**दुःखं शोको धनप्राप्तिर्नृपपूजा महद्धनम् ।**
**स्त्रीजन्म पुत्रताहानिः प्राच्यां द्वारफलान्यतः ।।३३०।।**

**निधनं बन्धनं भीतिः पुत्रावाप्तिर्धनागमः ।**
**यशो लाभश्चौरभयं व्याधिर्भीतिश्च दक्षिणे ।।३३१।।**

**शत्रुवृद्धिः पुत्रहानिः लक्ष्मीप्राप्तिर्धनागमः ।**
**सौभाग्यं धान्यलाभश्च दुःखं शोकश्च पश्चिमे ।।३३२।।**

**नैःस्वं स्त्रीदूषणं हानिः सम्पत्प्रीतिः सुखागमः ।**
**शत्रुबाधा तथा दुःखं चोत्तरस्यां दिशि क्रमात् ।।३३३।।**

**विस्ती [ता] रद्विगुणोत्सेधं द्वारं न विषमायतम् ।**
**पश्चिमे दक्षिणे वापि कपाटं च सुखप्रदम् ।।३३४।।**

वराहसंहितायामपि[1]—

**नवगुणसूत्रविभक्तान्यष्टगुणमथवा चतुःषष्टौ ।**
**द्वाराणि यानि तेषामनलादीनां फलोपनयः ।।३३५।।**

चतुःषष्टे तु षष्टिपदस्य नवगुणैकाशीतिपदेऽष्टगुणेन चतुःषष्टिपदः इत्यर्थः । पूर्वाण्यैशान्याद्यान्याग्नेय्यां दक्षिणानि जानीयात् । द्वाराणि च नैर्ऋत्याः पश्चिमकान्युत्तराणि वायव्ये ।

**अनलभयं स्त्रीजन्म प्रभूतधनता नरेन्द्रवाल्लभ्यम् ।**
**क्रोधपरता नृपत्वं क्रौर्यं चौर्यं च पूर्वेण ।।३३६।।**

**अल्पसुतत्वं प्रैष्यं नीचत्वं भक्ष [क्ष्य] पानसुतवृद्धिः ।**
**रौद्रं कृतघ्नमधनं सुतवीर्यघ्नं च याम्येन ।।३३७।।**

---

१. बृहत्संहिता, ५३।७१ ।

**सुतपीडा रिपुवृद्धिर्धनसुताप्तिः सुतार्थबलसम्पत् ।**
**पुत्रधनाप्तिर्वैरं सुतेन दोषाः स्त्रियाः नैःस्वम् ।।३३८।।**

दीपिका —

**कृत्तिकाद्यास्तु पूर्वादौ सप्त सप्तोदिता क्रमात् ।**
**यद्दिश्यं यस्य नक्षत्रं तत्र तस्य गृहं शुभम् ।।३३९।।**

**द्वारं नवमभागेषु कार्यं वामात् प्रदक्षिणम् ।**
**तृतीयतुर्ययोः प्राच्यं याम्ये तुर्येऽथ पश्चिमे ।**
**तुर्यपञ्चमयोः पञ्चत्रिचतुर्थेषु चोत्तरे ।।३४०।।**

अत्र एकादशीति [एकाशीति] पदविभागो [गः] पदीनां विप्रादिवर्णानां च वेश्मनि कार्योऽपरेषां चतुःषष्टिपद इति खेटनगरग्रामादौ शतपदविभागोऽपि यदाह विश्वकर्मा —

**राजवेश्मनि वेश्मश्च [वेश्म च] गृहादीनि च वर्णिनम् ।**
**एकाशीतिपदेनैव शक्रस्थानं च मापयेत् ।।३४१।।**

**नगरग्रामखेटादिच्छिबिराणि च भूभृताम् ।**
**स्थपतिर्वै शतपदविभागेनैव मापयेत् ।।३४२।।**

अन्यत्र तु चतुःषष्टिपदेन प्रमितिः स्मृतेति, न तु द्वाराणि प्रतिदिशमष्टावष्टावित्युक्तम् । तत्रैकाशीतिपदे नवमं पदमतिरिच्यते। शतपदे च नवमदशमे द्वे पदे, तत्र को निर्णयः, इति चेदत्रोच्यते। प्रागेव वास्तुदेवतानां विभागं कृत्वानलादीनां देवतानां पदेषु द्वाराणि निरूपणीयानि । कथिते च द्वारमिति[1]श्चिन्तनीयेति तथा च न (?) दभीतिः — स्यान्निश्चिते द्वार इति । तथा च पदविभागमुपादाय द्वारफलानि गर्गसंहितायाम् —

**पूर्वादिक्रमयोगेन हौताशे निर्भयं वदेत् ।**
**पार्जन्ये प्रचुरार्थो जयन्ते बहुवित्तता।।३४३।।**

---

१. द्वारमेति– क, ख ।

माहेन्द्रे नृपवाल्लभ्यं सौर्येऽतिक्रोधता भवेत्
अन्तरिक्षे तु विज्ञेयो नित्यं चौरसमागमः ॥३४४॥

स्यात् पुत्रनाशो वायव्ये पौष्णे प्रेष्यत्वमेव च[1] ।
नीचत्वं वितथे ज्ञेयं स्याद् ग [गृ] हाख्ये तु सन्ततिः ॥३४५॥

क्षुद्रकर्मा भवेद्याम्ये गान्धर्वं कृतनाशनम् ।
पित्र्यं स्वल्पायुरधनं व्ययो दौवारिको महान् ॥३४६॥

सुग्रीवे पुत्रनाशः स्यात् पुष्पदन्ते तु वर्धनम् ।
वरुणो क्रोधभागित्वं नृपभङ्गस्तथासुरे ॥३४७॥

नित्याविरोगतः शोचे [षे] पापाख्ये पापसञ्चयः ।
रोगे रोगवधो नित्यं नागे रिपुभयं महत् ॥३४८॥

मुख्ये धनसुतोत्पत्तिर्भल्लाटे विमलाः श्रियः ।
सौम्ये तु धर्मशीलत्वं भौजङ्गे बहुवैरिता ॥३४९॥

कन्यादोषा सदादित्ये त्वदितौ धनसंक्षयः ।
पदे पदे कृतं श्रेष्ठं द्वारं स्वफलदायकम् ।
पदद्वयकृतं यच्च तद् व्यामिश्रफलप्रदम् ॥३५०॥

## ॥ अथ द्वारस्य वेधफलम् ॥

वराहसंहितायाम्[2]—

मार्गतरुकोण[3]स्तम्भकूपभ्रमम(?)विद्धमशुभदं द्वारम् ।
उच्छ्रायाद् द्विगुणमितां त्यक्त्वा भूमिं[4]न दोषाय ॥३५१॥

भ्रमो जलनिर्गमः । प्रदे (?) विद्धं सम्मुखावस्थितम् । अत्रोच्छ्रायो द्वारस्य गृह्यते । तथा च गर्गः —

---

१. च य—क, ग ।  २. बृहत्संहिता, ५३।७६ ।
३. कूप –ख ।  ४. भूम्यम्—क, ग ।

द्वारोच्छ्रायाद् द्विगुणितां त्यक्त्वा भूमिं बहिः स्थितः ।
न दोषाय भवेत्येत .... .... .... ।।३५२।।

इति ।

रथ्याविद्धं द्वारं नाशाय कुमारदोषदं तरुणा ।
पञ्च[ङ्क]द्वारे शोको भयोऽम्बुनिःस्राविणी प्रोक्तः ।।३५३।।

कूपेनास्मारो भवति विनाशश्च देवताविद्धे ।
स्तम्भेन स्त्रीदोषाः कुलनाशो ब्रह्मणोऽभिमुखे[1] ।।३५४।।

पङ्कविद्धं द्वारं पङ्कद्वारं यस्य द्वारस्य, अतो निरन्तरं पङ्कस्तिष्ठति । देवता सुरप्रतिमाः । नाशः स्वामिन एव । ननु ब्रह्मवेधो कुलनाशः इत्युक्तं तत्र सन्देहः । किं वास्तुपदविन्यस्तब्रह्मपदवेधो, गृहवहिर्भूतब्रह्मप्रतिमावेधा-द्वेति स्पष्टं नावगम्यते । उच्यते । अविशेषादुभयविधस्य ब्रह्मणो वेधो दुष्ट-फल इह गृह्यते । यदाह विश्वकर्मा —

गृहमध्ये कृतं द्वारं द्रव्यधान्यविनाशनम् ।।३५५।।

भारद्वाजोऽपि —

शिरामर्माणि वंशाश्च नालमध्यं च सर्वशः ।
विहाय वास्तुमध्यं च द्वाराणि विनिवेशयेत् ।।३५६।।

यत्र तु पञ्चमद्वारस्य शुभफलता, तत्र विशेषविहितेनायमुत्सर्गो योद्यत्त इति भावः । पुनर्वराहः[2]—

उन्मादः सस्व [स्वय]मुद्घाटितेऽथ पिहिते स्वयं च कुलनाशः ।
मानाधिके नृपभयं दस्युभयं व्यसनमेव नीचे[2] च ।।३५७।।

द्वारं द्वारस्योपरि यत्तन्न शिवाय सङ्कटं यच्च ।
आध्मानं क्षुद्भयदं कुब्जं कुलनाशनं भवति ।।३५८।।

पीडाकरमतिपीडितमन्तर्विनतं भवेदभावाय ।
बाह्यविनते प्रवासो दिग्भ्रान्ते दस्युभिः पीडा ।।३५९।।

---

१ बृहत्संहिता, ५३।७७-७८ । २. बृहत्संहिता, ५३।७९-८१ ।

आध्मातं मध्यविपुलं मुरजानुकारम् । कुब्जमस्पष्टम् । अतिपीडित-मुदुम्बरेणातिपीडितम् ।

**मूलद्वारं नान्यैर्द्वारैरभिसंदधीत रूपद्धर्या ।**
**घटफलपत्रप्रमदादिभिश्च तन्मङ्गलैश्चिनुयात्[1] ।।३६०।।**

मूलद्वारं मुख्यद्वारम् । तस्य यादृशी रूपसौन्दर्यसमृद्धिस्तादृशीतरेषु न कार्येति तात्पर्यम् । तच्च मुख्यं द्वारं घटादिश्चिनुयात् । उपाचितं कुर्यात् घटाः कलशा, फलानि श्रीफलादीनि, पत्राणि वाह् नान्यश्चादीनि, प्रमदा-स्तत्सदृशकाष्ठादिपुत्रिका । क्वचित् प्रमथेति[2] पाठस्तत्र प्रमथाः नन्दादि-गणाः । आदि ग्रहणात्सिहहंसादयः ।

**पुनर्नगरग्रामाणां ये कोणास्तेषु निवसतां दोषाः ।**
**श्वपचादयोऽन्त्यजात्यास्तेष्वेव विवृद्धिमायान्ति[3] ।।३६१।।**

कोणेषु चरक्यादीनां राक्षसीनां स्थानादित्यर्थः । श्वपचाश्चाण्डालाः । वास्तुशास्त्रे —

**पृष्ठतः पार्श्वयोर्वापि न वेधं चिन्तयेद् बुधः ।**
**प्रासादे वा गृहे वापि वेधमग्रे विनिर्दिशेत् ।।३६२।।**

**वर्जयेदर्हतः पृष्ठं दृष्टिं चण्डीशसूर्ययोः ।**
**वामत्वं वासुदेवस्य दक्षिणं ब्रह्मणः पुनः ।।३६३।।**

**दक्षिणं दक्षिणत्वं[4] मानसं स्याद्वामे नीराश्रयम् ।**
**यदि तदविधं विजानीयाद गृहेशस्य क्षयावहम् ।।३६४।।**

**उपर्यु [?] यद्वेश्मनसमे कल्पयेत् क्वचित् ।**
**समवेधं भवेत् तु समस्तकुलनाशनम् ।।३६५।।**

**द्वारस्योपरि द्वारं [द्वारं] द्वारस्य सम्मुखम् ।**
**न कार्यं व्यपदं यस्मात् तद्गृहं न सुखावहम् ।।३६६।।**

---

१. बृहत्संहिता, ५३।८२ ।
२. प्रथमेति—क, ख
३. बृहत्संहिता, ५३।८४ ।
४. रक्षिणत्वम्—ग ।

अत्र विशेषः —

बहिर्द्वारं प्रकुर्वीत्त नेतरेतरसम्मुखम् ।
बहिर्द्वारं न कुर्वीत न तद् गृहद्वारसम्मुखम् ॥३६७॥

इति समराङ्गणसूत्रधारवचनात् ।

कूपमध्यं गता छाया गृहप्रासादयोर्यदि ।
छायाविद्धं भवेच्च गृहे नात्र संशयः ॥३६८॥

प्रथमान्तयामवर्ज्जं द्वित्रिप्रहरसम्भवाः ।
छायावृक्षद्वयादीनां सदा दुःखप्रदायिनी ॥३६९॥

## ॥ अथ गृहश्रीवृद्धिक्रमः ॥

विश्वकर्मा —

न दोषो यत्र वेधादिर्नैव यत्राखिलं भवेत् ।
बहुद्वाराणि नो यत्र स्याद्धान्यसञ्चयः ॥३७०॥

पूज्यते[1] देवता यत्रान्वेक्षणमादरात् ।
रक्ता च जनिका यत्र यत्र सम्मार्जनादिकम् ॥३७१॥

यत्र ज्येष्ठकनिष्ठादिव्यवस्था सुप्रतिष्ठता ।
भामवीजा संतपति र्भा[भा] नवो नैव यत्र च ॥३७२॥

दीप्यते कोपको यत्र पालनं यत्र रोगिणाम् ।
श्रान्तसंवाहना यत्र तत्र स्यात्कमला गृहे ॥३७३॥

इत्यादि स्मृतिपुराणेभ्योऽन्यदपि ।

## ॥ अथ वास्तूपक्रमयोग्यकालः ॥

नारदः —

---

१. पूज्यन्ते— ग ।

